ॐ

# BRAHMANHIKAM

A BOOK
CONTAINING VALUABLE SELECTIONS
ON
**Adwaita philosophy.**




*By The Late*

*Srimad Paramahamsa Parivrajakacharyavarya*

**Sri VASUDEVA BRAHMENDRA SARASVATI SWAMIGAL.**

ॐ

॥ श्री गु रु भ्यो न मः ॥

# ॥ ब्र ह्मा ह्नि क म् ॥



श्रीमत्परमहंस परिव्राजकाचार्य
श्री वा सु दे व ब्र ह्मे न्द्र स र स्व ती
ग्रथितम् ।

मायूरपुरस्थाङ्ग्लविद्याशालागीर्वाणभाषाध्यापकेन
कृष्णशास्त्रिणा परिशोधितम् ।



रिटयर्ड् इञ्जिनियर्,
यस्. नटेश शर्मणा प्रकाशितम् ।



मायूरक्षेत्रस्थ आनन्द सागर मुद्राक्षरशालायां
मुद्रितम् ।



१९३२.

मूल्यम् ] [ षट् कलाः.

ॐ

॥ श्रीगुरुभ्यो नमः ॥

## ॥ भूमिका ॥

सत्यं ज्ञानमनन्तं प्रत्यगभिन्नं स्वयंप्रभं ज्योतिः ।
आनन्दात्मकमजरं निखिलजगद्धेतुमाश्रये ब्रह्म ॥

इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमः पुरुषार्थ इति सर्वैरप्यभ्युपगतः । स च मोक्षो ब्रह्मज्ञानादेव सिद्ध्यति नान्यस्मादिति निखिलश्रुतिस्मृतीतिहासपुराणब्रह्मसूत्रादिग्रन्थेषु सुस्पष्टं निरूपितः । तादृशब्रह्मज्ञानं च श्रौतस्मार्तकर्मानुष्ठानेन श्रुतिप्रतिपादितमन्त्रोपासनेन च संजायत इति च प्रतिपादितम् । उपासनं च मानसं कर्मैव । अत एव भगवता गीतायां 'लोकेऽस्मिन् द्विविधा निष्ठा' इत्यादिभिः श्लोकैः सांख्ययोगः कर्मयोग इति द्वे एव निष्ठे निरूपिते । तादृशसांख्ययोगसाधनीभूतकर्मानुष्ठाने उपासने चातीव प्रेम्णा भाव्यमिति प्रेमापरनामकभक्तिशब्देन 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति' इत्यादिभिश्श्लोकैः प्रतिपादयांचक्रे । अतस्तादृशसांख्ययोगसाधनीभूतानां श्रौतानां स्मार्तानाञ्च कर्मणामनुष्ठानेन वीतकल्मषेभ्यो मुमुक्षुभ्यः परिपूतान्तःकरणेभ्यो द्विजेभ्यो महत्या करुणया श्रीमद्वाल्मीकिमहामुनिप्रणीतोत्तररामायणापरनामकात् श्रीरघुनाथं निमित्तीकृत्य श्रीमद्वसिष्ठमहर्ष्युपदिष्टात् ज्ञानवासिष्ठाख्यग्रन्थात् श्रीमद्बादरायणाचार्य-

प्रणीतायास्सूतसंहिताया भगवद्गीतायाश्च परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पूज्यपादकृतोपदेशसहस्र्यादिप्रकरणग्रन्थेभ्यः चतुर्वेदभाष्यकृद्भिः परमहंसपरिव्राजकाचार्यैश्श्रीमद्विद्यारण्यस्वामिभिर्विरचितेभ्यः पञ्चदश्यादिप्रकरणग्रन्थेभ्यश्चात्यन्तसारतराणि अहन्यहनि कर्तव्यनित्यकर्माणीवानवरतानुसन्धानयोग्यानि तत्त्वमस्यादिमहावाक्यार्थप्रतिपादकानि वाक्यान्येकीकृत्य ब्रह्माह्निकाख्यं ग्रन्थरत्नं परमहंसपरिव्राजकाचार्यैश्श्रीमद्वासुदेवब्रह्मेन्द्रसरस्वत्याख्यैः पाराशर्यवर्यैस्संग्रथितम् । निरन्तरमेतद्ग्रन्थवाक्यध्यानवशात्प्रतिबन्धकदुरितनिवृत्तिद्वारा मोक्षसाधकं ब्रह्मज्ञानं सौलभ्येन लभ्यते । तदेतत् स्वत एव महाशयानां विदुषां चेतसि स्फुरेत् । इति विस्तरशो न वक्तव्यम् ।

---

श्रीकावेरीतीरविलसच्छ्रीपञ्चनदक्षेत्रकृतजनिः सदाचारसम्पन्नः जनकसकाशादेवाऽधीतसकलविद्यः शमदमादिसाधनसम्पन्नः श्रैलिङ्गजात्यलङ्कारभूतो द्विजोत्तमः कश्चिदवर्तत । बाल्य एव तीव्रतरवैराग्यसम्पन्नोऽयं विप्रः कुटुम्बनिर्वहणासमर्थेप्यात्मजे स्वजायायां तद्रक्षणं कुटुम्बपरिपालनञ्चावस्थाप्य पञ्चविंशतिवयस्क एवातीव विरक्तिं प्रपन्नः तुर्याश्रममङ्गीकृत्य श्रीमत्परमहंसपरिव्राजकाचार्यश्रीकृष्णानन्दसरस्वतीनामकमस्करिवर्यमुपाश्रित्य तैः बहुधा परीक्ष्य सन्तुष्टैः कृतोपदेशस्तत्कटाक्षवशादौपनिषदज्ञानसम्पन्नस्तैस्सह चिरमवस्थानेनानुभूतब्रह्मविद्यारसो गणपत्युपपदाग्रहारविराजमानमठमलङ्कुर्वाणश्चिरमवर्तत । मायूरक्षेत्रमध्य-

स्थकवेरनृपकन्यकातटस्थविश्वेश्वरालयसन्निधौ राजन्मठमध्यासीनास्तत्र तत्र सच्छात्रेभ्यः सांसारिकतापनिवर्तनक्षमं साधनं वैदिकं कर्मैवेति बहुधा उपदिशन्तो बहून् शिष्यान् सोमादिक्रत्वनुष्ठानतत्परान् विधाय अन्येभ्यश्शिष्यगणेभ्योऽनवरतं श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादविरचितप्रस्थानत्रयभाष्योपदेशं कुर्वाणाः तुरीयाश्रमनियमादिकं सर्वमप्याश्रमधर्मं यावज्जीवं यथाविध्यनुष्ठितवन्तः प्रमोदनामके हायने माघशुद्धपञ्चम्यां विदेहकैवल्यं प्रपेदिरे ।

यतिवर्योऽसौ गृहस्थाश्रमवासिनां सर्वेषां विशेषतस्सन्यासिनां च सर्वदा अनुसन्धानयोग्यं भवसागरतारकं ब्रह्माह्निकनामकं ग्रन्थरत्नं रचयामास ।

---

तस्यैतस्य ग्रन्थस्य मुद्रणविषये स्वामिनश्शिष्याग्रगण्यः मधुरानगरवास्तव्य उद्योगविरामसुखमनुभवन् ( रिटयर्ड् इञ्जिनियर् ) य. ल. नटेश शर्मा द्विजवरो यावदपेक्षितद्रव्यवितरणेन सर्वेषामास्तिकानाम्मुमुक्षूणां ब्रह्माह्निकाख्यग्रन्थपारायणोपकारकरणेन सुकृतपात्रं विद्यते ।

अस्य ग्रन्थस्य परिशोधने प्रमादाद्यत्किञ्चित्स्खलितं स्याच्चेत्तन्महाशयैस्सोढ्वानुग्राह्योऽयं जन इति सप्रश्रयमभ्यर्थये ।

आङ्ग्लविद्याशालागीर्वाणभाषाध्यापकः
श्रीकृष्णशर्मा ।

ॐ

।उपोद्घातः।

बौद्धानामार्हतानाञ्च कल्पयामास वै हरिः ।
कापालिकादिवामान्ताम्हरस्तत्रानथाकरोत् ॥ १ ॥

वात्स्यायनं लोकायतं चार्वाकं विधिना कृतम् ।
एवं त्रिमूर्तयश्चक्रुः पाषण्डस्थापकानि तु ॥ २ ॥

वर्णत्रयातिरिक्तानां तत्र दीक्षा प्रशस्यते ।
शुद्धतन्त्रेषु शैवेषु तथा पाशुपतादिषु ॥ ३ ॥

पाञ्चरात्रादितन्त्रेषु ब्राह्मसौरादिकेषु च ।
शुद्धेष्वप्येषु तन्त्रेषु त्रिवर्णी नैव दीक्षयेत् ।
वेदमार्गेष्वनर्हाश्चेद्दीक्षयेयुस्त्रिवर्णिनः ॥ ४ ॥
वसिष्ठः ।
शृणु त्वं नृपशार्दूल कौलिकानाञ्च चेष्टितम् ।
कलौ खलु भविष्यन्ति पाषण्डाः कौलिकाश्रयाः ॥ ५ ॥
राजा ।
जाने कथं महाभाग कौलिकान्मूढचेतसः ।
तेषां चिह्नं मम ब्रूहि यथा जानामि तत्त्वतः ॥ ६ ॥
वसिष्ठः ।
अन्तः कौला बहिश्शैवाः सभामध्ये तु वैष्णवाः ।
इति कौला भविष्यन्ति लोकसम्मोहकारिणः ॥ ७ ॥

यतयश्च भविष्यन्ति कलौ कौलपरायणाः ।
आचरन्ति मुदा कौलं मठेषु प्रमदान्विताः ॥ ८ ॥

विहरिष्यन्ति मोहेन कौलमार्गावलम्बिनः ।
त्यक्त्वा लज्जामिमं लोकं वर्तन्ते गोखरादिवत् ॥ ९ ॥

अन्वेषयन्ति संहृष्टा उपभोगार्थमात्मनः ।
आमिषं प्रमदां मद्यं सूकरा इव विड्भुजः ॥ १० ॥

आत्मा सर्वत्र सम्पूर्णो निष्कलङ्को निरञ्जनः ।
चैतन्यरूपो विमलो विरजस्को विभुस्स्वयम् ।
गुणदोषैः प्रकृतिजैः कथं बाध्येत चिन्मयः ॥ ११ ॥

एक आत्मा हि सर्वेषां देहास्सर्वे च भौतिकाः ।
अतो नास्त्यात्मनो दोषो देहो देहेन युज्यते ॥ १२ ॥

देहसामान्यवत्त्वेन भूतसामान्यतोऽपि वा ।
देहे च देहसम्बन्धात्कथं दोषो भविष्यति ॥ १३ ॥

यो भुङ्क्ते विविधान्भोगान्यथेष्टं मनसा रुचीन् ।
स तु वै भाग्यवान्देहो नान्यथा सत्यमीरितम् ॥ १४ ॥

इतीहैव स्वर्गलोको नास्ति लोकान्तरं परम् ॥ १५ ॥

अस्ति चेल्लोकमपरमन्यग्रामगतस्य वै ।
गृहे दत्त्वान्नपानीयं किमु तृप्तिर्भविष्यति ॥ १६ ॥

भोगोपयुक्तो यो देहस्स्वर्गस्तेनानुभूयते ।
भोगहीनस्य देहस्य नरकप्राप्तिरेव तत् ॥ १७ ॥

अतो वैषयिकान्भोगान्भजध्वं सर्वथा जनाः ॥ १८ ॥

यावन्नायाति मरणं यावन्नेन्द्रियविक्लवम् ।
तावदाशु हि भुञ्जध्वं विषयान्सुखसम्पदः ॥ १९ ॥

भोगस्यायतनं सिद्धं शरीरं पण्डितोत्तमाः ।
त्यक्त्वा कुलं जातिमानं भजध्वं सततं प्रियान् ॥ २० ॥

पीत्वा चैवागलं मद्यं रात्रौ भुक्त्वामिषं स्त्रियम् ।
प्रातरेत्य सभां ब्राह्मीं मध्ये तिष्ठन्ति दुर्भगाः ॥ २१ ॥

सङ्कराणाञ्च हीनानां वाममार्गं विदुर्बुधाः ।
वैनायके पाशुपते शैवे स्कान्दे च सात्वते ॥ २२ ॥

पाञ्चरात्रे तथा सौरे दीक्षयेयुश्च पादजान् ।
त्रिवर्णबान्धवास्सर्वे श्रुत्यामनधिकारिणः ॥ २३ ॥

श्रुतिपथगलितानां मानुषाणां तु तन्त्रं
गुरुगुरुरखिलेशः सर्ववित्प्राह शम्भुः ।
श्रुतिपथगलितानां मानुषाणां तु तन्त्रं
हरिरपि मुनिमुख्याः प्राह तन्त्रे स्वकीये ॥ २४ ॥

हरहरिविधिपूजा कीर्तिता सर्वतन्त्रे
श्रुतिपथनिरतानां यद्वदुक्ता तु पूजा ।
श्रुतिपथगलितानामेव तन्त्रोक्तपूजा
श्रुतिपथनिरतानां सर्ववेदोदितैव ॥ २५ ॥

दीक्षितानां तु तन्त्रेषु नराणामङ्कनं द्विजाः ।
वेदमार्गैकनिष्ठस्तु मोहेनाप्यङ्कितो यदि ।
पतत्येव न सन्देहस्तथा पुण्ड्रान्तरादपि ॥ २६ ॥

वैदिकश्चापि तन्त्रेषु दीक्षितं न स्पृशेत्सदा ॥ २७ ॥

यथा वाराणसीतुल्या पुरी नास्ति श्रुतौ स्मृतौ ।
तथा वैदिकतुल्यस्तु नास्ति तन्त्रावलम्बिषु ॥ २८ ॥

ओदनेन समं भोज्यं यथा लोके न विद्यते ।
तथा वैदिकतुल्यस्तु नास्ति तन्त्रावलम्बिषु ॥ २९ ॥

वेदोक्तं तान्त्रिकास्सर्वे स्वीकुर्वन्ति द्विजर्षभाः ।
नोपजीवन्ति तन्त्रोक्तं वेदः साक्षात्सनातनः ॥ ३० ॥

मार्गान्तरोदिताचारात्स्मार्तो धर्मस्सुशोभनः ।
स्मार्ताच्छ्रौतः परो धर्मः श्रौताच्छ्रेष्ठो न विद्यते ॥ ३१ ॥

अतीन्द्रियार्थे धर्मादौ शिवे परमकारणे ।
श्रुतिरेव सदा मानं स्मृतिस्तदनुसारिणी ॥ ३२ ॥

कुर्वते कर्म भोगाय कर्म कर्तुं च भुञ्जते ।
नद्यां कीटा इवावर्तादावर्तान्तरमाशु ते ।
व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम् ॥ ३३ ॥

संसारकारणं माया सा सदा सद्विलक्षणा ।
प्रतीत्यैव तु सद्भावस्तस्या नैव प्रमाणतः ।
साऽपि ब्रह्मातिरेकेण वस्तुतो नैव विद्यते ॥ ३४ ॥

तत्त्वज्ञानेन मायाया बाधो नान्येन कर्मणा ।
ज्ञानं वेदान्तवाक्योत्थं ब्रह्मात्मैकत्वगोचरम् ॥ ३५ ॥

तच्च देवप्रसादेन गुरोः साक्षान्निरीक्षणात् ।
जायते शक्तिपातेन वाक्यादेवाधिकारिणाम् ॥ ३६ ॥

ज्ञानेच्छाकारणं दानं यज्ञाश्च विविधा अपि ।
तपांसि सर्ववेदानां वेदान्तानां तथैव च ॥ ३७ ॥

पुराणानां समस्तानां स्मृतीनां भारतस्य च ।
वेदाङ्गानां च सर्वेषामपि वेदार्थपारगाः ॥ ३८ ॥

अध्यापनं चाध्ययनं वेदार्थे त्वरमाणता ।
उपेक्षा वेदबाह्यार्थे लौकिकेष्वखिलेष्वपि ।
शान्तिदान्त्यादयो धर्मा ज्ञानस्याङ्गानि सुव्रताः ॥ ३९ ॥

उपदेशमवाप्यैवमाचार्यात्तत्त्वदर्शिनः ।
पञ्चकोशविवेकेन लभन्ते निर्वृतिं पराम् ॥ ४० ॥

प्रथमं सच्चिदानन्दे भासमानेऽथ तावता ।
बुद्धिं नियम्य नैवोर्ध्वं धारयेन्नामरूपयोः ॥ ४१ ॥

शमाद्यैः श्रवणाद्यैश्च तत्र तत्रोचितैः क्षयम् ।
नीतेऽस्मिन्प्रतिबन्धेऽतः स्वस्य ब्रह्मत्वमश्नुते ॥ ४२ ॥

मध्याह्नार्कमरीचिकास्विव पयःपूरो यदज्ञानतः
खं वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति ।
यत्तत्त्वं विदुषां निमीलति पुनस्स्रग्भोगिभोगोपमं
सान्द्रानन्दमुपास्महे तदमलं स्वात्मावबोधं महः ॥ ४३ ॥

---

शुद्धाशुद्ध सूचिका ।

| पत्रे | पङ्क्तौ | अशुद्धः | शुद्धः पाठः |
|---|---|---|---|
| २ | ३ | यस्मादेवमिद | यस्मादेवमिदं |
| ८ | १ | द्वता | द्वैता |
| | ५ | स्वमुक्तयै | स्वमुक्त्यै |
| १० | १० | मानोराज्य | मनोराज्ये |
| १५ | १८ | व्यतिरेकाम्या | व्यतिरेकाभ्या |
| २५ | १३ | लकौकं | लौकिकं |
| ३९ | ७ | विजानीथ | विजानीथाः |
| ,, | ,, | विमुञ्चथ | विमुञ्चत |
| ४९ | १० | यज्ञानं | यद्ज्ञानं |
| ५४ | १७ | ज्वलोर्व्यण्ड | जलोर्व्यण्ड |
| ५५ | १ | चेतनष्वेषु | चेतनेष्वेषु |

---



ॐ

॥ श्रीगुरुभ्यो नमः ॥



# ॥ ब्रह्माह्निकम् ॥

यत्पादरेणुकलिलं सलिलं निपीय
  मूकोऽपि मूकयति पण्डितमण्डलानि ।
सद्भागधेयममितस्वपदप्रबोध-
  निर्धूतमोहतिमिरं गुरुमानतोऽस्मि ॥ १ ॥

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुस्साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥ २ ॥

योऽस्मिन्देहेत्वहमहमिति प्रत्ययालंबनस्स-
  न्नास्ते नित्यं सकलकरणग्रामचेष्टा निदानः ।
साक्षात्पश्यन्विविधविकृतीः प्राणबुद्धीन्द्रियाणां
  सोऽहम्प्रत्यङ्ङहमधिगतस्स्वात्मनाशुद्धबोधः ॥ ३ ॥

निद्राकल्पितदेशकालविषयज्ञात्रादि सर्वं यथा
मिथ्या तद्वदिहापि जाग्रति जगत्स्वाज्ञानकार्यत्वतः ।
यस्मादेवमिदं शरीरकरणप्राणाहमाद्यप्यसत्
तस्मात्तत्त्वमसि प्रशान्तममलं ब्रह्माद्वयं यत्परम् ॥ ४ ॥

आशा यस्य विलोकितेऽपि विषये नोदेति नाप्याग्रहो
ब्रह्मण्येव तदात्मना स्थिततया नाहंमतिर्वर्ष्मणि ।
नेदं कार्यमकार्यमित्यपि कथा बाह्यार्थसंभावना
जीवन्नेव स मुक्त इत्यभिदधे प्राचीनवाचा यमी ॥ ५ ॥

त्वं निर्विकल्पेन समाधिना स्वं
सर्वात्मकं वीक्ष्य विवेकदृष्ट्या ।
स्वात्मन्यशेषं प्रविलाप्य दृश्यं
पूर्णात्मना तिष्ठ सुखं विमुक्तः ॥ ६ ॥

साक्षिण्यशेषं प्रविलाप्य दृश्यं
तमद्वये ब्रह्मणि निष्प्रपञ्चे ।
ततस्स्वयं व्योमवदेव पूर्ण-
बोधात्मना तिष्ठति यस्स मुक्तः ॥ ७ ॥

निरञ्जने निर्विकारे निष्क्रियेऽसङ्गवस्तुनि ।
आत्मन्यारोपितं सर्वं स्वप्नवत्सर्वदा मृषा ॥ ८ ॥

अनादिकालीनदुरन्तवासना-
दोषेण दुष्टा पुरुषस्य बुद्धिः ।

नानाविधं विश्वमिदं प्रसूते
स्वप्नादिवद्ब्रह्मणि केवलेऽद्वये ॥ ९ ॥

अविद्यमानोऽप्यवभासते द्वयो
ध्यातुर्धिया स्वप्नमनोरथौ यथा ।
तत्कर्मसङ्कल्पविकल्पकं मनो
बुधो निरुन्ध्यादभयं ततो भवेत ॥ १० ॥

विषयाकारतापत्तिर्वृत्तेर्येन निवार्यते ।
विपश्चिता मनस्तेन निर्जितं नात्र संशयः ॥ ११ ॥

उन्मेषश्च निमेषश्च सुकरस्स्याद्यथा तथा ।
मनोजयोऽपि सुकरो विदुषस्त्वात्मवेदिनः ॥ १२ ॥

दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् ।
संपन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृतिः ॥ १३ ॥

मनोदृश्यमिदं द्वैतं यत्किञ्चित्सचराचरम् ।
मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते ॥ १४ ॥

आत्मसत्यानुबोधेन न संकल्पयते यदा ।
अमनस्तां तदा याति ग्राह्याभावे तदग्रहम् ॥१५ ॥

नारायणोऽहं नरकान्तकोऽहं
पुरान्तकोऽहं पुरुषोऽहमीशः ।

अखण्डबोधोऽहमशेषसाक्षी
निरीश्वरोऽहं निरहश्च निर्ममः ॥ १६ ॥

स्वयं ब्रह्मा स्वयं विष्णुस्स्वयमिन्द्रस्स्वयं शिवः ।
स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किञ्चन ॥ १७ ॥

मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः ।
अहमेव न मत्तोऽन्यदिति बुध्यध्वमञ्जसा ॥ १८ ॥

इन्द्रियार्थभ्रमो जाग्रत्स्वप्नोऽन्तःकरणभ्रमः ।
सुप्तं तद्वासनाबीजं तुर्या मूर्तिस्तदन्विता ॥ १९ ॥

विशुद्धं ज्ञानमेवैकं मायया भासते त्रिधा ।
ग्राहकाद्यैर्यथा स्वप्ने यत्र संवित्क्रिया फलम् ॥ २० ॥

ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः ।
अर्थस्वरूपमज्ञानात्पश्यन्त्यन्ये कुदृष्टयः ॥ २१ ॥

ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम् ।
अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा ॥ २२ ॥

ज्ञानस्वरूपे मय्येव ज्ञेयं सर्वं प्रकल्पितम् ।
स्वप्नवत्सर्वदा नास्ति ज्ञानरूपोऽहमद्वयः ॥ २३ ॥

ज्ञानस्वरूपान्मत्तोऽन्यज्ज्ञेयं नैवास्ति किञ्चन ।
स्वप्नवज्ज्ञेयरूपेण मनोमायैव जृम्भते ॥ २४ ॥

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥ २५ ॥

यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृम्भितः ।
तथा जाग्रत्प्रपञ्चोऽयं मयि मायाविजृम्भितः ॥ २६ ॥

ईक्षेत विभ्रममिदं मनसो विलासम्
दृष्टं विनष्टमतिलोलमलातचक्रम् ।
विज्ञानमेकमुरुधेव विभाति माया
स्वप्नस्त्रिधागुणविसर्गकृतो विकल्पः ॥ २७ ॥

ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः ।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतस्स्थितम् ॥ २८ ॥

बुद्धेर्जागरणं स्वप्नस्सुषुप्तिरिति चोच्यते ।
मायामात्रमिदं राजन्नानात्वं प्रत्यगात्मनि ॥ २९ ॥

मनस्सृजति वै देहान्गुणान्कर्माणि चात्मनि ।
तन्मनस्सृजते माया ततो जीवस्य संसृतिः ॥ ३० ॥

एकान्तस्थितिरिन्द्रियोपरमणे हेतुर्दमश्चेतस-
स्संरोधे करणं शमेन विलयं यायादहंवासना ।
येनानन्दरसानुभूतिरचला ब्राह्मी सदा योगिन-
स्तस्माच्चित्तनिरोध एव सततं कार्यः प्रयत्नान्मुनेः ॥

लक्ष्ये ब्रह्मणि मानसं दृढतरं संस्थाप्य बाह्येन्द्रियं
स्वस्थाने विनिवेश्य निश्चलतनुश्चोपेक्ष्य देहस्थितिम् ।
ब्रह्मात्मैक्यमवेक्ष्य तन्मयतया चाखण्डवृत्त्याऽनिशं
ब्रह्मानन्दरसं पिबात्मनि मुदा शून्यैः किमन्यैर्भृशम् ॥

चेत्यसंवेदनाज्जीवो भवत्यायाति संसृतिम् ।
तदसंवेदनाद्रूपं समायाति समं पुनः ॥ ३३ ॥

क्रमेण युगपद्वैषा सृष्टिर्ज्ञेया यथाश्रुति ।
द्विविधश्रुतिसद्भावाद्द्विविधस्वप्नदर्शनात् ॥ ३४ ॥

प्राणे गते यथा देहः सुखं दुःखं न विन्दति ।
तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रयो भवेत् ॥ ३५ ॥

शुद्धो निरञ्जनोऽनन्तो बोधोऽहं प्रकृतेः परः ।
चेष्टमानमिमं देहं पश्याम्यन्यशरीरवत् ॥ ३६ ॥

नष्टे पूर्वविकल्पे तु यावदन्यस्य नोदयः ।
निर्विकल्पकचैतन्यं स्पष्टं तावद्विभासते ॥ ३७ ॥

तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्
क्वचित्कदाचिद्द्विज वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेदा-
द्विभिन्नचित्तैर्बहुधाभ्युपेतम् ॥ ३८ ॥

अन्नमयादेरस्मादपरं यदि नानुभूयते किञ्चित् ।
अनुभवितान्नमयादेरस्तीत्यस्मिन्न कश्चिदपलापः ॥ ३९ ॥

स्वयमेवानुभवत्वाद्यद्यप्येऽतस्य नानुभाव्यत्वम् ।
सकृदप्यभावशङ्का न भवेद्बोधस्वरूपसत्तायाः ॥ ४० ॥

प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥ ४१ ॥

स्वप्नजागरिते सुप्तिं भावाभावौ तथा धियाम् ।
यो वेत्त्यऽविक्रियः साक्षी सोऽहमित्यवधारय ॥ ४२ ॥

घटावभासको दीपो घटादन्यो यथेष्यते ।
देहावभासको देही तथाऽहं बोधलक्षणः ॥ ४३ ॥

घटज्ञानं पटज्ञानं कुड्यादिज्ञानमेव यत् ।
तदेवात्मा परं ब्रह्म निर्विशेषं श्रुतेर्मतम् ॥ ४४ ॥

दृश्यन्नास्त्येव तद्यस्माद्दृष्ट्रा दृश्यं प्रकल्पितम् ।
स्वप्नवद्दृक्स्वरूपे हि मयि सर्वं प्रकल्पितम ॥ ४५ ॥

प्रातीतिकत्वं वेदान्तसिद्धान्ते जगतस्स्फुटम् ।
अतस्सुप्तौ जगल्लीनं प्रबोधे जायते पुनः ॥ ४६ ॥

दृष्टिसृष्टिमिमां ब्रह्मानुभवी बहु मन्यते ।
आकाशनैल्यवज्ज्ञातसत्तैका जगतो मता ॥ ४७ ॥

द्वैताभावाच्चिन्तनीयं स्वस्मादन्यत्किमस्ति भो ।
अतश्चिन्तां परित्यज्य सुप्तवत्सर्वदा भव ॥ ४८ ॥

बद्धो मुक्तो महाविद्वानज्ञ इत्यादिभेदतः ।
एक एव सदा भाति नानेव स्वप्नवत्स्वयम् ॥ ४९ ॥

अतस्स्वमुक्त्यैवान्येषामाभासानामपि ध्रुवम् ।
मुक्तिं जानाति हे देव ह्यात्मना ह्यात्मविद्वरः ॥ ५० ॥

स्वसंसारदशायां तु स्वभ्रान्त्या सर्वदेहिनाम् ।
आभासानांच संसारं वेद मुक्तिं तथैव च ५१ ॥

गच्छन्तिष्ठन्स्वपञ्जाग्रन्निवसन्नुत्पतन्पतन् ।
असदेवेदमित्यन्तर्निश्चित्यास्थां परित्यज ॥ ५२ ॥

अस्त्यनन्तविलासात्मा सर्वगस्सर्वसंश्रयः ।
चिदाकाशोऽविनाशात्मा प्रदीपस्सर्वजन्तुषु ॥ ५३ ॥

अचेत्यचित्प्रकाशात्मा विज्ञानात्मा निरामयः ।
परमाकाशकोशाच्छ शान्तसर्वभवभ्रमः ॥ ५४ ॥

कार्यकारणता ह्यत्र न किञ्चिदुपपद्यते ।
यादृगेव परं ब्रह्म तादृगेव जगत्त्रयम् ॥ ५५ ॥

येन बुद्धन्तु तस्यैतदाकाशादपि सूक्ष्मकम् ।
न बुद्धं येन तस्यैतद्वज्रसाराचलोपमम् ॥ ५६ ॥

सर्वं हि मन एवेदमित्थं स्फुरति मूर्तिमत् ।
जलं जलाशयस्फारैर्विचित्रैश्चक्रकैरिव ॥ ५७ ॥

निखिलं दृश्यविशेषं दृग्रूपत्वेन पश्यतां तेषाम् ।
बन्धो नापि विमुक्तिर्न च परमात्मत्वमपि न जीवत्वम् ॥ ५८ ॥

घटवद्दृश्यभूतस्य शरीरस्य तु साक्षिणम् ।
चिद्रूपमात्मना पश्यन्कथं बध्येत कर्मभिः ॥ ५९ ॥

चेत्यानुपातरहितं सामान्येन च सर्वगम् ।
यच्चित्तत्त्वमनाख्येयं स आत्मा परमेश्वरः ॥ ६० ॥

ज्ञानमात्रमिदं सर्वं न ज्ञेयं विद्यते पृथक् [ क्वचित् ]।
स्वप्नादिज्ञानदृष्टान्तात्प्रत्यग्ब्रह्माद्वयत्वतः ॥ ६१ ॥

अहो नु चित्रं यत्सत्यं ब्रह्म तद्विस्मृतं नृणाम् ।
यदसत्यमविद्याख्यं तन्नूनं स्मृतिमागतम् ॥ ६२ ॥

को देवो यो मनस्साक्षी मनो मे दृश्यते मया ।
तर्हि देवस्त्वमेवाऽसि ह्येको देव इति श्रुतेः ॥ ६३ ॥

निस्सन्दिग्धा विपर्यस्ता देहेऽज्ञस्यात्मधीर्यथा ।
तद्वद्ब्रह्मात्मधीरस्य जीवन्मुक्तिरितीर्यते ॥ ६४ ॥

देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ।
आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥ ६५ ॥

आत्मा क्षेत्रज्ञ इत्युक्तस्संयुक्तः प्राकृतैर्गुणैः ।
तैरेव च विनिर्मुक्तः परमात्मेत्युदाहृतः ॥ ६६ ॥

यदिदं दृश्यते किञ्चिद्दर्शनात्तन्न भिद्यते ।
दर्शनं द्रष्टृतो नान्यद्द्रष्टैव हि ततो जगत् ॥ ६७ ॥

आयासस्तावदत्यल्पः फलं मुक्तिरिहैव तु ।
तथापि परमाद्वैतं नैव वाञ्छन्ति मानवाः ॥ ६८ ॥

स्वायत्तमेकान्तहितं स्वेप्सिततत्यागवेदनम् ।
यस्य दुष्करतां यातं धिक्तं पुरुषकीटकम् ॥ ६९ ॥

रात्रिघस्रौ सुप्तिबोधावुन्मीलननिमीलने ।
तूष्णींभावमनोराज्ये इव सृष्टिलयाविमौ ॥ ७० ॥
मनोराज्ये

श्रूयते दृश्यते यद्यत्स्मर्यते वा नरैस्सदा ।
असदेव हि तत्सर्वं यथा स्वप्नो मनोरथः ॥ ७१ ॥

अन्तःकरणतद्वृत्तिसाक्षी चैतन्यविग्रहः ।
आनन्दरूपस्सत्यस्सन् किन्नात्मानं प्रपद्यसे ॥ ७२ ॥

तस्माद्राम जगन्नासीन्न चास्ति न भविष्यति ।
चेतनाकाशमेवाशु कचतीत्थमिवात्मनि ॥ ७३ ॥

अत्यन्ताभाव एवास्य जगतो विद्यते यदा ।
तदा ब्रह्मेदमखिलमिति तद्राम नान्यथा ॥ ७४ ॥

नानाघटपटाकारैश्चेतस्स्थितिमुपागतम् ।
तदेवाशु शमं नेयं मिथ्यायक्ष इवोत्थितः ॥ ७५ ॥

श्रूयतां ज्ञानसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
भोगेच्छामात्रको बन्धस्तत्त्यागो मोक्ष इष्यते ॥ ७६ ॥

किमन्यैश्शास्त्रसन्दर्भैः क्रियतामिदमेव तु ।
यद्यत्स्वाद्विह तत्सर्वं त्यज्यतां विषवह्निवत् ॥ ७७ ॥

सर्वेषामेव भूतानां तिक्तकट्वादिवेदिनाम् ।
एकत्वादनुभूतेस्तु कुतश्चिन्मात्रभिन्नता ॥ ७८ ॥

न च तन्नाम वस्त्वस्ति यद्भूत्वा संप्रलीयते ।
आभासमात्रमेवेदं न सन्नासच्च राघव ॥ ७९ ॥

नित्यस्सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।
एकस्सन्भिद्यते भ्रान्त्या मायया न स्वभावतः ॥ ८० ॥

तस्माद्द्वैतमेवास्ति न प्रपञ्चो न संसृतिः ।
सोऽहं ब्रह्म न संसारी न मत्तोऽन्यत्कदाचन ॥ ८१ ॥

इति विद्यात्स्वमात्मानं स समाधिः प्रकीर्तितः ।
पश्यञ्छृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपंच्छ्वसन् ॥ ८२ ॥

प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
अकर्ताहमभोक्ताहमसङ्गः परमेश्वरः ॥ ८३ ॥

सदा मत्सन्निधानेन चेष्टते सर्वमिन्द्रियम् ।
इति विज्ञानसंपन्नः संगं त्यक्त्वा करोति यः ॥ ८४ ॥

लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।
नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् ॥ ८५ ॥

पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ।
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ८६ ॥

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमान् लोकान्न हन्ति न निबद्ध्यते ॥ ८७ ॥

जाग्रत्येव हि संसुप्तां भावयन्सुस्थिरां स्थितिम् ।
सर्वमस्मीति संचिन्त्य सत्तैकात्मवपुर्भव ॥ ८८ ॥

बहिर्न किञ्चिदप्यस्ति खाद्रयब्ध्युर्वीदिगादिकम् ।
एतत्स्वचित्त एवास्ति पत्रगुल्ममिवांकुरे ॥ ८९ ॥

मनोनिघ्नतया विश्वमिदं परिणतिङ्गतम् ।
घटत्वेनेव मृत्पिण्डो धूमोऽम्बुदतयेव च ॥ ९० ॥

यदा संक्षीयते चित्तमभावात्यन्तभावनात् ।
संविन्मात्रस्वरूपस्य सत्तासामान्यता तदा ॥ ९१ ॥

येषु येषु पदार्थेषु मनो मज्जति बालवत् ।
तेभ्यस्तेभ्यस्समाहृत्य तद्धि तत्त्वे नियोजयेत् ॥ ९२ ॥

यो नित्यमध्यात्ममयो नित्यमन्तर्मुखस्सुखी ।
नित्य चिद्दनुसन्धानो मलशोकैर्न बाध्यते ॥ ९३ ॥

व्यवहारपरोऽप्युच्चे रागद्वेषमयोऽपि सन् ।
नान्तः संश्लेषमाप्नोति पद्मो जलगतो यथा ॥ ९४ ॥

तानि मित्राणि शास्त्राणि तानि तानि दिनानि च ।
विरागोल्लासवान्येभ्य आत्मचित्तोदयः स्फुटम् ॥ ९५ ॥

सर्वमात्मेदमखिलं किं वाञ्छामि त्यजामि किम् ।
इत्यसङ्गस्थितिं विद्धि जीवन्मुक्ततनुस्थितिम् ॥ ९६ ॥

न बन्धोऽस्ति न मोक्षोऽस्ति कदाचित्कस्यचित्क्वचित् ।
सर्वमात्ममयं शान्तमित्येवं प्रत्ययं स्फुटम् ॥ ९७ ॥

सबाह्याभ्यन्तरं राम सर्वत्र दृढतां नय ।
सुखी दुःखी विमूढोऽस्मीत्येता दुर्दृष्टयस्स्मृताः ॥ ९८ ॥

आसु चेद्वस्तुबुद्धिस्ते तच्चिरं दुःखमिच्छसि ।
नास्त्यविद्येति संजाते निश्चये शास्त्रयुक्तितः ॥
गलत्यविद्यातापेन तुषारकणिका यथा ॥ ९९ ॥

देहातीता महात्मानश्चिन्मात्रे स्वात्मनि स्थिताः ।
दूराद्देहं समीक्षन्ते प्रेक्षको जनतां यथा ॥ १०० ॥

देहे दुःखातिसंक्षुब्धे का नः क्षतिरुपस्थिता ।
रथे विधुरिते भग्ने सारथेः क्वेव खण्डना ॥ १०१ ॥

विचार्यार्यैस्सहालोक्य शास्त्राण्यध्यात्मभावनात् ।
सत्तासामान्यनिष्ठत्वं यत्तद्ब्रह्म परं विदुः ॥ १०२ ॥

स्वप्ने यथैकः पुरुषो देवतिर्यङ्नरादितः ।
विवर्तते प्रबोधेन्यत्स्वस्मात्किञ्चिन्न विद्यते ॥ १०३ ॥

स्वात्ममात्रं विजानाति स्वाप्नजीवेश्वरं जगत् ।
एवमद्वैतसंपूर्णसच्चिदानन्दलक्षणम् ॥ १०४ ॥

जीवेशजगदाकाराद्भाति ब्रह्मैव विभ्रमात् ।
श्रवणादिभिरुद्दीप्तस्वात्मब्रह्मावबोधतः ॥
स्वयमेवेति तत्सर्वं भासते भ्रान्तिशान्तितः ॥ १०५ ॥

यथा दारु गजत्वेन नरत्वेन विवर्तते ।
यथाकाशस्तलत्वेन नीलत्वेन विवर्तते
तथा ब्रह्म जगत्वेनानादिभ्रान्त्या विवर्तते ॥ १०६ ॥

सैव भ्रान्तिरविद्या स्याद्विक्षेपावृतिरूपिणी ।
मूलप्रकृतिरित्येषा कीर्त्यतेऽनादिवासना ॥ १०७ ॥

आत्माऽसङ्गस्ततोऽन्यत्स्यादिन्द्रजालं हि मायिकम् ।
इत्यचञ्चलनिर्णीते कुतो मनसि वासना ॥ १०८ ॥

चिन्मात्रं यद्यदा भातं जलवाहविवर्तवत् ।
तत्तादृक्कथमन्याभमन्यस्यासंभवाद्भवेत् ॥ १०९ ॥

जागरस्वप्नसुषुप्तीनामागमापायभासनम् ।
यतो भवत्यसावात्मा स्वप्रकाशचिदात्मकः ॥ ११० ॥

यदेवाम्बु स आवर्तो न त्वस्त्यावर्तवस्तु सत् ।
द्रष्टैवास्ते दृश्यमिव दृश्यं न त्वस्ति वस्तु सत् ॥ १११ ॥

दुर्बुद्धिभिः कारणकार्यभावं सङ्कल्पितं दूरतरे व्युदस्य ।
तदेव तत्सत्यमनादिमध्यजगत्तदेतत्स्थितमित्यवेहि ॥ ११२ ॥

चिच्चेत्यकलनाबन्धस्तन्मुक्तिर्मुक्तिरुच्यते ।
चिदचेत्याऽखिलात्मेति सर्वसिद्धान्तसंग्रहः ॥ ११३ ॥

आत्मनो व्यतिरेकेण न किञ्चिदपि विद्यते ।
सर्वं ब्रह्मेति मे तत्त्वमेतत्तत्भावयाम्यहम् ॥ ११४ ॥

यावत्सर्वं न संत्यक्तं तावदात्मा न लभ्यते ।
सर्वावस्थापरित्यागे शेष आत्मेति कथ्यते ॥ ११५ ॥

बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् ।
दृश्यत्वाव्यतिरेकाभ्यामाद्यन्तवदवस्तु यत् ॥ ११६ ॥

काभ्या

न स्वप्नजाग्रन्न च तत्सुषुप्तन्न खञ्जलम्भूरनिलोऽग्निरर्कः ।
संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति ॥ ११७

संविदेव नृणाञ्जीवस्स यथा दृढभावनः ।
तथा सुखी वा दुःखी वा भवेदित्येष निर्णयः ॥ ११८ ॥

भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत् ।
अपुनस्स्मरणं साधो मन्ये विस्मरणं वरम् ॥ ११९ ॥

हरिर्यद्युपदेष्टा ते हरः कमलजोऽपि वा ।
तथापि न तव स्वास्थ्यं सर्वविस्मरणादृते ॥ १२० ॥

उपदेशक्रमो राम व्यवस्थामात्रपालना ।
ज्ञप्तेस्तु कारणं शुद्धा शिष्यप्रज्ञैव केवला ॥ १२१ ॥

मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः ।
साऽसंप्रज्ञातनामाऽसौ समाधिरभिधीयते ॥

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः ।
ता येनैवानुभूयन्ते सोऽध्यक्षः पुरुषः परः ॥ १२३ ॥

मनोमयत्वात्सर्वेऽर्थाः स्वप्नजागरयोस्समाः ।
दृष्टा नष्टा अपि ध्यातुः शोकमोहभयप्रदाः ॥ १२४ ॥

बाह्यचिन्ता न कर्तव्या तथैवान्तरचिन्तना [ चिन्तिका ]।
सर्वचिन्तां परित्यज्य चिन्मात्रपरमो भव ॥ १२५ ॥

ज्ञेयवस्तुपरित्यागाद्विलयं याति मानसम् ।
मानसे विलयं याते कैवल्यमवशिष्यते ॥ १२६ ॥

अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे किञ्चन दह्यते ॥ १२७ ॥

ज्ञानाज्ज्ञेयं पृथङ्नास्ति ज्ञेयं ज्ञानात्मकं ततः ।
प्रत्यग्बोधेऽद्वये सिद्धे ज्ञेयोन्मेषादिकं कुतः ॥ १२८ ॥

यत्सामान्यविशेषाभ्यां उपलभ्येत स भ्रमः ।
अन्योन्याप्राश्रयात्सर्वं आद्यन्तवदसत्खलु ॥ १२९ ॥

परागर्थप्रमेयेषु या फलत्वेन सम्मता ।
संवित्सैवेह मे योऽर्थो वेदान्तोक्तिप्रमाणतः ॥ १३० ॥

दृग्दृश्यौ द्वौ पदार्थौ स्तः परस्परविलक्षणौ ।
दृग्ब्रह्म दृश्यं मायेति सर्ववेदान्तडिण्डिमः ॥ १३१ ॥

ज्ञानज्ञेयपदार्थौ स्तः परस्परविलक्षणौ ।
ज्ञानं ब्रह्मैव तज्ज्ञेयं माया तस्मिन्प्रकल्पितम् ॥ १३२ ॥

देहेन्द्रियादावसति भ्रमोदितां
विद्वानहन्तां न जहाति यावत् ।
तावन्न तस्यास्ति विमुक्तिवार्ता-
ऽप्यस्त्वेष वेदान्तनयान्तदर्शी ॥ १३३ ॥

अतः प्राहुर्मनोऽविद्यां पण्डितास्तत्त्वदर्शिनः ।
येनेदं भ्राम्यते विश्वं वायुनेवाभ्रमण्डलम् ॥ १३४ ॥

वेदनं सुखदुःखादेर्यत्तत्प्रत्यक्चिदात्मकम् ।
तद्ब्रह्माहमिति ज्ञात्वा मुच्यतेऽत्रैव मा चिरम् ॥ १३५ ॥

नन्वविद्यावदिष्टश्चेद्ब्रह्म दोषो महानयम् ।
निरविद्ये च विद्याया आनर्थक्यं प्रसज्यते ॥ १३६ ॥

अस्याविद्येत्यविद्यायामेवासित्वा प्रकल्पिते ।
ब्रह्मद्वारा त्वविद्येयं न कथञ्चन युज्यते ॥ १३७ ॥

आकाशनैल्यवज्ज्ञेयं मयि भाति चिदम्बरे ।
कालत्रयेऽपि नास्त्येव वन्ध्यापुत्र इवात्मनि ॥ १३८ ॥

आत्मानैव भवेच्चिन्त्यो यतो वाच इति श्रुतेः ।
अनात्मापि तथैव स्यात्तुच्छत्वाच्छशश्रृङ्गवत् ॥ १३९ ॥

भूतभौतिकमायानामसत्त्वेऽत्यन्तवासिते ।
सद्वस्त्वद्वैतमित्येषा धीर्विपर्येति न क्वचित् ॥ १४० ॥

नरकादिव निर्विण्णो यावन्नाब्रह्मणो नरः ।
न तावदधिकारोऽस्ति कैवल्यज्ञानवर्त्मनि ॥ १४१ ॥

मय्यखण्डचिदालोके गवाक्षातपरेणुवत् ।
अण्डानां कोटयो भान्ति भ्रमात्स्वप्नादिदृश्यवत् ॥ १४२॥

जन्मान्तरमहाभाग्यवशादेवान्त्यजन्मनि ।
अहं ब्रह्मेति विज्ञाय मुच्यते नान्यथा भ्रमात् ॥ १४३ ॥

तृणादिविषयं ज्ञानं यत्तद्विषयवर्जितम् ।
तदेवाहं परं ब्रह्मेत्येष वेदान्तनिर्णयः ॥ १४४ ॥

सर्वं ब्रह्म विजानीयात्सर्वं पश्यति चात्मनि ।
आत्मा घटस्थचैतन्यमद्वैतं शाश्वतं परम् ॥ १४५ ॥

घटाद्विभिन्नतो ज्ञात्वा वीतरागं विवासनम् ।
एवं भिथः समाधिस्स्यात्सर्वसंकल्पवर्जितः ॥ १४६ ॥

उत्तमव्यवस्थाधिगमाय विद्व-
न्नुपायमेकं तव निर्दिशामि ।
पश्यन्नुदासीनतया प्रपञ्चं
सङ्कल्पमुन्मूलय सावधानः ॥ १४७ ॥

चिदाकाशात्मनो नैव निद्रालस्यसुखादयः ।
घटवद्दृश्यमानत्वादात्मनस्त्वद्वयत्वतः ॥ १४८ ॥

चितिरूपं स्वमात्मानं भजध्वं चेत्यवर्जितम् ।
नास्ति चेत्यश्चितेरन्यद्दर्पणे प्रतिबिम्बवत् ॥ १४९ ॥

चितिश्चेत्यश्चितिरहश्चितिः सर्वश्चराचरम् ।
यतः सर्वश्चितिमनुभाति सा तु स्वतन्त्रतः ॥ १५० ॥

अतश्चितिं जनास्सर्वभासिनीं सर्वसंश्रयाम् ।
भजध्वं भ्रान्तिमुत्सृज्य चितिमात्रसुदृष्टयः ॥ १५१ ॥

रज्जुसर्पादिवद्विश्वं नाज्ञातं सदितिस्थितम् ।
प्रबुद्धदृष्टिसृष्टत्वात्सुषुप्तौ च लयश्रुतेः ॥ १५२ ॥

वन्ध्यापुत्रादिकं नैव चिन्तयेदबुधोऽपि हि ।
तत्तुल्यमनृतं द्वैतं विवेकीचेत्कथं स्मरेत् ॥ १५३ ॥

चिद्विलासः प्रपञ्चोऽयं न तु दुःखात्मको भवेत् ।
अपीन्द्रवारुणी राम सितया कटुकी भवेत् ॥ १५४ ॥
अज्ञस्य दुर्लभं ज्ञानमज्ञानं दुर्लभं विदः ।
दुःखायैवान्यथाज्ञानं तत्त्वज्ञानं सुखावहम् ॥ १५५ ॥

हरो वापि हरिर्वापि विधिर्वा ब्रह्यकोटिगः ।
मत्तो नान्योऽस्ति तुच्छत्वादद्वयत्वाच्चिदात्मनः ॥ १५६ ॥

प्रबुद्धस्वप्नदृष्टान्ययोगक्षेमं न चिन्तयेत् ।
जागरेपि तथा चेत्स्यादनायासेन मुच्यते ॥ १५७ ॥

अध्यारोपापवादाभ्यां जायते लीयते ( बध्यते मुच्यते ) मनः ।
न केनचिच्च संबन्धो ममत्वद्वैतचित्तनोः ॥ १५८ ॥

त्यक्त्वा देहाभिमानादि मृत्योर्नैव बिभेति यः ।
स एव मुच्यते बन्धान्नान्यो वेदान्तवेद्यपि ॥ १५९ ॥

प्रत्यक्चैतन्यमद्वैतं अशन्यादि भयानकम् ।
ब्रह्मैवेदमिदं सर्वं सर्वं खल्विति हि श्रुतिः ॥ १६० ॥

निर्विशेषश्चिदाकाशो बहिर्देहादिवान्तरः ।
इति निश्चित्य सुदृढं शून्यवत्सर्वदा भव ॥ १६१ ॥

आन्तरस्वप्नवन्मिथ्या बहिर्जाग्रन्मनोमयः ।
नास्ति द्वैतं सदेत्येवं शुद्धाद्वैतं समाश्रय ॥ १६२ ॥

यच्चैतन्यमनुस्यूतं जाग्रत्स्वप्नसुषुप्तिषु ।
तदेव त्वमिदं तत्त्वमितो नास्त्यधिकं पदम् ॥ १६३ ॥

मायैव नास्ति चेद्दृश्यमितोऽन्यत्स्यात्कथं पृथक् ।
इति संवित्प्रत्यगात्मा समाधिस्स्यान्न चापरः ॥ १६४ ॥

देहाहङ्कारमूला हि सर्वानर्थपरम्परा ।
अतः प्रयत्नाद्धातव्यश्शनैश्शश्वद्दुरासदः ॥ १६५ ॥

नाहं देहो न मे देहस्साक्ष्यसङ्गश्चिदद्वयः ।
इत्येतत्प्रथमं सर्वसाधनानां यतो जनैः ॥ १६६ ॥

स्तम्भान्तराले सुस्पष्टं संविद्भाति यथा तथा ।
द्यावापृथिव्योर्मध्येपि स्वयं ज्योतिश्चिदम्बरम् ॥ १६७ ॥

अनात्ममात्रे यस्यास्ति ह्यरुचिर्मलमूत्रवत् ।
स एव तत्त्वं जानाति नान्यशास्त्रकुदृष्टयः ॥ १६८ ॥

नेति नेतीति निखिलं निषिध्याशु प्रतिक्षणम् ।
चिद्घनानन्दरूपेण मुक्तिस्तूष्णीमवस्थितिः ॥ १६९ ॥

सुप्रसिद्धं सुसुलभं सुसुखं श्रुतिसम्मतम् ।
व्यवहारास्पदं ज्ञानं साक्षाद्ब्रह्मापरोक्षचित् ॥ १७० ॥

मातापित्रोर्मलोद्भूतं निन्द्यं दौर्गन्धिकं वपुः ।
कथमेतद्भवेदात्मा ह्यहो मोहस्य वैभवम् ॥ १७१ ॥

अणुमात्रमपि द्वैतं स्वान्यत्वेन विजानतः ।
उदरादिश्रुतिर्ब्रूते मरणादिमहाभयम् ॥ १७२ ॥

एकमेवाद्वयं ज्ञानं सुप्तिवज्ज्ञेयवर्जितम् ।
इत्येवं सर्वदा स्वप्नेऽप्यनुभूय विमुच्यते ॥ १७३ ॥

अन्यत्र वित्तात्कान्तायाः विरक्तास्सर्व एव हि ।
तयोर्विरक्तो यः कश्चित्स्यान्न वेति तु संशयः ॥ १७४ ॥

तृणकीटादिदेवान्तचराचरविभेदतः ।
एकोऽपि बहुधा भासि मायया स्वप्नद्रष्टृवत् ॥ १७५ ॥

दृश्यमानमिदं सर्वं दर्शनाभासमेव हि ।
दर्शनादन्यवस्त्वेव वाचारम्भणतो न हि ॥ १७६ ॥

निद्राजाग्रन्मध्यभागे संविद्भेदान्तरे तथा ।
मध्ये संविद्द्वयोश्च सूक्ष्मबुद्ध्याभिलक्षय ॥ १७७ ॥

एतत्पदं निजं रूपं यज्ज्ञात्वा न विमुह्यति ।
एतदज्ञानमात्रेण प्रवृत्तं जगदीदृशम् ॥ १७८ ॥

चित्ताकाशश्चिदाकाशमाकाशश्च तृतीयकम् ।
द्वाभ्यां शून्यतरं विद्धि चिदाकाशमिदं मुने ॥ १७९ ॥

देशाद्देशान्तरप्राप्तौ संविदोर्मध्यमेव यत् ।
निमेषेण चिदाकाशं तद्विद्धि मुनिपुङ्गव ॥ १८० ॥

कुदृष्टिशास्त्रगर्तेषु लुठतां नैव सद्गतिः ।
गुरूपदिष्टवेदान्तमहावाक्यादृतेऽन्यथा ॥ १८१ ॥

निःशेषनाशो मोक्षस्स्यादाशायास्सर्ववस्तुषु ।
नेतोऽन्यत्साधनं साक्षान्मुख्यं ज्ञानस्य सिद्धये ॥ १८२ ॥

परिभूतोऽपि यस्सोढुं क्षमते भिक्षुवत्त्रयम् ।
स्वप्नादिवन्मनःकार्यमिति मुक्तस्स निश्चयी ॥ १८३ ॥

तत्त्वज्ञानाज्ज्ञानमेव ज्ञेयवद्भाति लौकिकम् ।
अज्ञातसत्ता नैवास्ति ह्यसतो ज्ञेयवस्तुनः ॥ १८४ ॥

महावैराग्यसंपत्तेर्नान्यज्ज्ञानस्य कारणम् ।
चित्तशास्त्रावलिप्तस्य नाणुमात्रविरक्तता ॥ १८५ ॥

विशुद्धं केवलं ज्ञानं प्रत्यक्सम्यगवस्थितम् ।
सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम् ॥ १८६ ॥

अत्यन्तमेव शून्यं सन्मनस्स्वप्नादिवन्मृषा ।
जाग्रद्देशक्रियाकालवस्तुरूपेण भासते ॥ १८७ ॥

प्रकाश्यगुणदोषादि प्रकाशं नैव संस्पृशेत् ।
ज्ञेयस्य गुणदोषादि ज्ञानं नैव तथा स्पृशेत् ॥ १८८ ॥

शून्यं सर्वात्मना द्वैतमतोऽन्यन्नेति च श्रुतेः ।
सर्वोपनिषदाकूतं नान्यत्किञ्चिच्चिदात्मनः ॥ १८९ ॥

पारमार्थिकमद्वैतं नित्यं निरुपमं सुखम् ।
अत्यन्तदुःसहं दुःखं द्वैतं तुच्छं महानृतम् ॥ १९० ॥

दृश्यं शून्यं सदा विद्धि कामक्रोधाद्यसिद्धये ।
कामक्रोधादिविषयः को वा का किं कुतः क्व च ॥ १९१ ॥

तत्र को मोह इत्यादिश्रुत्या द्वैतनिषेधनात् ।
शून्यसाक्षी बोध आत्मा भूमानन्दश्चिदद्वयः ॥ १९२ ॥

अहं त्वं तदिति भ्रान्त्या त्वेकस्मिन्भेदकल्पनात् ।
कामक्रोधादिवशगो दुःखं याति सुखाच्च्युतः ॥ १९३ ॥

माया नास्ति कथं सत्यं कार्यं वन्ध्यासुतादिवत् ।
शून्यमप्यवभासेत दृश्यं स्वप्नादिवन्मृषा ॥ १९४ ॥

शास्त्रपाण्डित्यमज्ञानवर्धकं न तु मोचकम् ।
वेदान्तगुरुवाक्येन कुर्याद्दृश्यस्य शून्यताम् ॥ १९५ ॥

अनात्मविषयं शास्त्रं कथमात्मावबोधकम् ।
गुरुवेदान्तभक्त्यैव ह्यात्मा ज्ञेयो न चान्यथा ॥ १९६ ॥

निमीलने यथा द्वैतं न किञ्चिदनुभूयते ।
उन्मीलने दृश्यमानमप्येवं नेति चिन्त्यताम् ॥ १९७ ॥

दृश्यमानमपि द्वैतं जातु स्वप्नादिवन्न हि ।
इति निश्चयदार्ढ्येन न पुनर्जायते मनः ॥ १९८ ॥

अभ्यस्तमनसः क्वापि क्रिया काचिन्न संभवेत् ।
अधिष्ठानात्मसत्ताकमारोप्यं स्वाप्निकादिवत् ॥ १९९ ॥

ज्ञानमेकं सदा सत्यं ज्ञेयं शून्यं सदेति तु ।
अनुक्षणमविश्रान्तं सदा मत्वा विमुच्यते ॥ २०० ॥

परिभूतेर्मृतेर्नैव यो बिभेति कदाचन ।
देहादिभ्रमसन्त्यागात्स वै मुक्तो भविष्यति ॥ २०१ ॥

लौकिकं
लकौकं विषयज्ञानं यत्तद्ब्रह्म चिदात्मकम् ।
तन्निष्ठविषयं त्यक्त्वा ज्ञानं ब्रह्मेति निश्चिनु ॥ २०२ ॥

शास्त्रान्तरैर्यथातत्त्वं निर्णीतं तत्ततोऽन्यथा ।
वेदान्ताभिमतं ज्ञेयं गुरुतोऽद्वयलक्षणम् ॥ २०३ ॥

अथात आदेश इति काण्वादिश्रुतिरब्रवीत् ।
सर्वं शून्यं नेति नेति वाक्यैरात्मा चिदद्वयः ॥ २०४ ॥

अद्वैतदृढविज्ञाने यथेष्टाचरणं कुतः ।
जीवन्मुक्त्यादिशास्त्रं तु ज्ञानस्तुत्यर्थवादतः ॥ २०५ ॥

बालान्प्रति विवर्तोऽयं ब्रह्मणस्सकलञ्जगत् ।
अविवर्तितमानन्दमास्थिताः कृतिनस्सदा ॥ २०६ ॥

न किञ्चिदपि वस्त्वस्ति पृथक् प्रत्यक्चिदात्मनः ।
सुप्तिवत्सर्वशून्यत्वात्तत्साक्षी चित्सदाऽद्वयः ॥ २०७ ॥

सर्वदा सर्वशून्यत्वनिश्चयात्स्यान्मनोलयः ।
समाधिरपि नान्योऽतो निर्विकल्पाख्य उत्तमः ॥ २०८ ॥

सर्वं शून्यं सदा शून्यं पूर्णं चिन्मात्रमद्वयम् ।
नानामतविकल्पानामास्पदं निर्मलं शिवम् ॥
नानामतमहामद्यपायन्मत्ताद्यगोचरम् ॥ २०९ ॥

मनोवागादिगम्यत्वे ब्रह्मणो ब्रह्मता कथम् ।
अतस्तूष्णीमवस्थानं तत्प्राप्तौ साधनं श्रुतम् ॥ २१० ॥

दृश्यं शून्यं दृगात्मैव केवलस्सुखमाततः ।
सुप्तिकाले यथा जाग्रत्येवं कालत्रयेऽपि च ॥ २११ ॥

मनोरथं द्विधा मत्वा जाग्रत्स्वप्न इति भ्रमात् ।
भोग्यबुद्ध्या संसरति जाग्रद्वस्तुन्यलात्मधीः ॥ २१२ ॥

अनात्मशून्यताज्ञानदार्ढ्याद्देहात्मधीक्षये ।
तूष्णीम्भावो भवेन्मुक्तेस्साधनं परमं श्रुतेः ॥ २१३ ॥

नारम्भः परिणामो वा विवर्तश्श्रुतिसम्मतः ।
असत्त्वादात्मनोऽन्यस्य नैव कारणकार्यता ॥ २१४ ॥

अद्वैतब्रह्मरूपत्वात्कुतः कारणकार्यता ।
काणादसांख्यबौद्धादिमतमेतन्न तु श्रुतेः २१५ ॥

सर्वाऽऽसङ्गविनिर्मुक्तो मोक्षमात्रप्रयोजनः ।
अतोऽविक्रियते प्रत्यग्ज्ञानोत्पत्तौ न रागवान् ॥ २१६ ॥

मृगतृष्णायामुदकं शुक्तौ रजतं भुजङ्गमो रज्ज्वाम् ।
मयि लसति चन्द्रयुगवद्भ्रान्तं निखिलञ्जगद्रूपम् ॥ २१७ ॥

शास्त्रान्तरैस्तु यत्प्रोक्तं तत्त्वमित्यन्यथा मृषा ।
अद्वैतमेव चिन्मात्रं सत्यं वेदान्तसम्मतम् ॥ २१८ ॥

अत एव श्रुतिस्सर्वशास्त्रप्रोक्तं निषेधति ।
नेति नेतीति चातोऽन्यदार्तमित्यादि वाक्यतः ॥ २१९ ॥

ज्ञानमात्रं परं ब्रह्म ज्ञेयं बुद्ध्यादिकं जडम् ।
ज्ञानं प्रत्यक्परं ब्रह्म ज्ञेयं तुच्छं पराग्जडम् ॥ २२० ॥

दुःखाद्यनुभवो ब्रह्म दुःखादि ज्ञेयवर्जितम् ।
केवलानुभवो ह्यात्मा ब्रह्मभिन्नं न किञ्चन ॥ २२१ ॥

मनश्शून्यं सदा कुर्यात्सुषुप्तिमूर्छादिवद्बुधः ।
यदा निर्विषयं चित्तं तदा शून्यं विमुच्यते ॥ २२२ ॥

पदार्थभासनं ज्ञानं स्वयञ्ज्योतिरितीर्यते ।
नाग्न्यादिवत्तमोनाशकरं ध्वान्तानुभूतितः ॥ २२३ ॥

श्रुतिस्मृतीतिहासादि जगज्जीवेश्वरादिकम् ।
स्वप्नादिवन्मनोमात्रमप्याश्चर्यकरं मृषा ॥ २२४ ॥

यथोक्तसाधनोपेतं ब्रह्मज्ञानं विमुक्तिदम् ।
अन्यथा विपरीतं स्याद्रसताम्रादिभस्मवत् ॥ २२५ ॥

सारासारविवेकी सन् लोकतत्त्वविचक्षणः ।
आत्मानात्मस्वरूपज्ञो भव तूष्णीं मृतादिवत् ॥ २२६ ॥

हस्तस्थकौस्तुभं त्यक्त्वा काचकाङ्क्षीव दुर्भगः ।
बुद्धिसाक्षिणमात्मानं हित्वान्यं तु य इच्छति ॥ २२७ ॥

सर्वसाक्षिस्वरूपं यच्चिन्मात्रञ्चेत्यवर्जितम् ।
अहमेव न मत्तोऽन्यदिति मुक्तो दृढाग्रहात् ॥ २२८ ॥

साधनान्तरसङ्घातं संत्यज्याशु सुदूरतः ।
शून्यं ध्यायेत्सदा दृश्यं तूष्णीम्भावो हि साधनम् ॥ २२९ ॥

किन्तच्चिन्त्यमचिन्त्यं किमिति सम्यग्विचारिते ।
चिन्ताविषयशून्यत्वात्तूष्णीम्भावोऽवशिष्यते ॥ २३० ॥

यथाजाग्रत्तथा स्वप्नो यथा स्वप्नस्तथा जनिः ।
इति निर्णयतस्तूष्णीं न किञ्चिदपि चिन्तयेत् ॥ २३१ ॥

यावद्यावद्दृश्यमात्रे तुच्छत्वदृढनिश्चयः ।
तावत्तावन्मनोनाशात्स्वात्मानन्दो विभासते ॥ २३२ ॥

श्रुतिस्मृत्युक्तकर्मैव दृढवैराग्यकारणम् ।
स्वात्मज्ञाने मुख्यहेतुर्दृढवैराग्यमेव हि ॥ २३३ ॥

अत्र सम्भाविताशेषशङ्कापङ्कसुशोधनम् ।
स्वप्नाद्यभेद्यदृष्टान्तगङ्गोदौर्विधीयताम् ॥ २३४ ॥

भ्रान्तधीकल्पिते दृश्ये शोकमोहादिकं कुतः ।
विदुषामपि दुस्त्याज्यं विना तु दुरितक्षयम् ॥ २३५ ॥

यदस्ति यद्भाति तदात्मरूपं
नान्यत्ततो भाति न चान्यदस्ति ।
स्वभावसंवित्प्रतिभाति केवलं
ग्राह्यं ग्रहीतेति मृषैव कल्पना ॥ २३६ ॥

अन्तरेण श्रुतिं त्वन्यमानेनाद्वैतधीर्यदि ।
चक्षुषापि रसज्ञानं भवेत्तस्य दुरात्मनः ॥ २३७ ॥

यदि वेदः प्रमाणं स्याच्छ्रौतमद्वैतमेव हि ।
नासतो विद्यते भावोऽपीत्याह भगवान्स्फुटम् ॥ २३८ ॥

कलौ वेदान्तिनः पापाः कान्ताकाञ्चनतत्पराः ।
सांपरायं श्रौतकर्म न कुर्वन्त्यन्यथैव तु ॥ २३९ ॥

अलमिह परोपदेशैर्मौनं मुक्तेस्तु साधनं मुख्यम् ।
नैवापद्यपि हेया निष्ठाऽद्वैते सुखानुभूत्याद्या ॥ २४० ॥

विषयापेक्षं दुःखं दृष्टं लोके सुखं तु वैषयिकम् ।
अद्वैतमेव सुसुखं तदपि च दृष्टं सुषुप्तिकाले हि ॥ २४१ ॥

विना साधनमर्थानां सिद्धिर्न क्वापि दृश्यते ।
ब्रह्मज्ञानं कथं सिद्ध्येद्विना श्रुत्युक्तसाधनम् ॥ २४२ ॥

अग्नौ पतङ्गवद्बुद्धावपि दुःखात्मके भवे ।
सुखभ्रान्त्या पतन्त्येव श्रौतसंस्कारवर्जिताः ॥ २४३ ॥

अष्टाधिकचत्वारिंशत्संस्कारजविवेकतः ।
वैराग्यादेर्ज्ञानसिद्धिर्नान्यसाधनकोटिभिः ॥ २४४ ॥

दृश्यं नास्तीति सततं सत्यं ब्रूते श्रुतिस्स्वयम् ।
भक्त्या बुद्ध्वा मातृवाक्यं न किञ्चिदपि चिन्तयेत् ॥ २४५ ॥

व्रात्यश्श्रोत्रिय इत्यादिभेदधीर्बन्धकारणम् ।
सुप्तिमूर्च्छादिवच्छ्रद्धशून्यधीर्मोक्षकारणम् ॥ २४६ ॥

प्रत्यगात्मा परञ्ज्योतिर्माया सा तु महत्तमः ।
तथा सति कथं मायासंभवः प्रत्यगात्मनि ॥ २४७ ॥

तस्मात्तर्कप्रमाणाभ्यां स्वानुभूत्या च चिद्घने ।
स्वप्रकाशैकसंसिद्धे नास्ति माया परात्मनि ॥ २४८ ॥

व्यावहारिकदृष्ट्येयं विद्याऽविद्या च नान्यथा ।
तत्त्वदृष्ट्या तु नास्त्येव तत्त्वमेवास्ति केवलम् ॥ २४९ ॥

व्यावहारिकदृष्टिस्तु प्रकाशाव्यभिचारतः ।
प्रकाश एव सततं तस्मादद्वैतमेव हि ॥ २५० ॥

अद्वैतमिति चोक्तिश्च प्रकाशाव्यभिचारतः ।
प्रकाश एव सततं तस्मान्मौनं हि युज्यते ॥ २५१ ॥

महामायामोहशक्तिरामुष्मिककृतार्थता ।
ऐहिकेत्वकृतार्थत्वं विदुषामपि दृश्यते ॥ २५२ ॥

येन केनाप्युपायेन यत्र क्व च न किञ्चन ।
श्रुत्युक्तमौनादेवान्यन्मुक्तेस्साधनमिष्यते ॥ २५३ ॥

सहस्राब्धा गौडपादो वासिष्ठमनुचिन्तयन् ।
माण्डूक्यकारिकां चक्रे शुद्धाद्वैतविभासिनीम् ॥ २५४ ॥

माण्डूक्यवार्तिकैवैषा वासिष्ठाख्या महामतिः ।
सर्वोपनिषदां सूत्रं माण्डूक्योपनिषच्छिवा ॥ २५५ ॥

श्रीरामसदृशश्शिष्यः वसिष्ठसदृशो गुरुः ।
वासिष्ठसदृशं शास्त्रं न भूतो न भविष्यति ॥ २५६ ॥

अस्ति वन्ध्यासुतसमं दृश्यं माया मनोमयम् ।
नास्ति सत्यस्वप्रकाशस्वानन्दानुभवात्मदृक् ॥ २५७ ॥

स्वप्नसुप्त्यादिदृष्टान्तैर्बन्धमोक्षविवेकतः ।
महाभाग्यैस्तत्त्वबोधैनेत्थं मुह्यति पण्डितः ॥ २५८ ॥

साक्षात्कारस्सुखादीनां भोगस्संसार एव सः ।
स्वस्वरूपं नित्यमुक्तं ज्ञानं निर्विषयं सुखम् ॥ २५९ ॥

चिन्मात्रमेव चिन्मात्रान्नान्यत्किञ्चन वस्तु सत् ।
अभ्यसेदुन्मनीभावं मुमुक्षुस्त्वरयाऽनिशम् ॥ २६० ॥

अस्तित्ववेदने दुःखं सुखं नास्तित्वनिश्चये ।
दृश्यस्य फलवैषम्यान्नास्तित्वं दृढमभ्यसेत् ॥ २६१ ॥

माया नास्ति न तत्कार्यं जगज्जीवेश्वरादिकम् ।
सन्मात्रं केवलं ज्ञानमद्वयं शून्यवत्सदा ॥ २६२ ॥

अज्ञातसत्तयास्वर्गनरकादि न किञ्चन ।
कर्मोपासनकाण्डादेश्शुद्धाद्वैते समन्वयात् ॥
नित्यकर्मोपासनादिसाधनं त्वात्मवेदने ॥ २६३ ॥

जन्मादिरहितं ज्ञानं परं तेज [ ज्योति ] स्सदद्वयम् ।
जन्मादिरहितं ज्ञेयं सदा शून्यं परं तमः ॥ २६४ ॥

लयविक्षेपरहितं शैलवन्निश्चलं मनः ।
यदा भवेत्तदा मुक्तो जागरेऽपि सुषुप्तवत् ॥ २६५ ॥

नित्यापरोक्षचिन्मात्रस्वस्वरूपसुखाद्वये ।
आचारकृतमोऽसत्यमायाद्वैतस्य का कथा ॥ २६५ ॥

सर्वं ब्रह्मैव चिन्मात्रं चितश्चैत्यं न विद्यते [भिद्यते]।
स्वप्नवत्सर्वसाक्ष्येऽपि जागरे सत्यधीः कथम् ॥ २६६ ॥

स्वप्नभ्रमपदार्थेषु तत्काले सत्यधीर्यथा ।
तद्वज्जाग्रत्पदार्थेऽपि तत्काले सत्यधीर्भ्रमात् ॥ २६७ ॥

इदमेव चिदाकाशं पुरो भाति न भौतिकम् ।
प्रत्यगात्मा परं ब्रह्म चिदाकाशमखण्डितम् ॥ २६८ ॥

वन्ध्यापुत्रकृतं यद्वच्चिदाकाशं न संस्पृशेत् ।
मिथ्यादेहादिजं तद्वत्पुण्यपापं न संस्पृशेत् ॥ २६९ ॥

असाध्यं चिन्त्यते मूढैस्साध्यं नैव तु साधितुम् ।
महापापवशाद्बुद्धेरिच्छाद्रूपसमुद्भवात् ॥ २७० ॥

कारणोपादानमृते कार्यं नैवोपलभ्यते ।
कथं बुद्धोऽपि तद्विद्याज्जगत्तत्कारणं विना ॥ २७१ ॥

द्वैताभावदृढज्ञाने विषयाभावतो मनः ।
न किञ्चिच्चिन्तयेत्तूष्णीं मृतसुप्तादिवद्भवेत् ॥ २७२ ॥

ब्रह्मादिस्तम्बपर्यन्तं चराचरमिदं जगत् ।
चितिस्वप्नादिवद्भाति प्रबोधे नास्त्यसद्भवेत् ॥ २७३ ॥

नैवेन्द्रजालिकोऽपीच्छेत्स्वसृष्टं महदद्भुतम् ।
तथा नेच्छति चेन्मुक्तस्स्वसृष्टं स्वप्नवज्जगत् ॥ २७४ ॥

व्यवहारे मुख्यहेतुर्ज्ञानं सर्वपदार्थगम् ।
तदेवात्मा जगन्मूलं सत्यं ज्ञानमिति श्रुतेः ॥ २७५ ॥

गुडनिम्बरसो यद्वदन्यथा गृह्यते विषात् ।
विषयाशाविषादात्माप्येवं कामवशानुगैः ॥ २७६ ॥

चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया ।
अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरम् ॥ २७७ ॥

नीरोग उपविष्टो वा रुग्णो वापि लुठन्भुवि ।
मूर्च्छितो वा त्यजत्वेष प्राणान्भ्रान्तिर्न सर्वथा ॥ २७८

दिने दिने स्वप्नसुप्त्योरधीते विस्मृतेऽप्ययम् ।
परेद्युर्नानधीतस्स्यात्तद(दा) विद्या विनश्यति ॥ २७९ ॥

प्रमाणोत्पादिता विद्या प्रमाणं प्रबलं विना ।
न नश्यति न वेदान्तात्प्रबलं मानमीक्ष्यते ॥ २८० ॥

बोधेऽप्यनुभवो यस्य न कथञ्चन जायते ।
तं कथं बोधयेच्छास्त्रं लोष्टं नरसमाकृतिम् ॥ २८१ ॥

जिह्वा मेऽस्ति न वेत्युक्तिः लज्जायै केवलं यथा ।
न बुद्ध्यते मया बोधो बोद्धव्य इति तादृशी ॥ २८२ ॥

स वेत्ति वेद्यं तत्सर्वं नान्यस्तस्यास्ति वेदिता ।
विदिताविदिताभ्यां तत्पृथक् बोधस्वरूपकम् ॥ २८३ ॥

पञ्चकोशपरित्यागे साक्षिबोधावशेषतः ।
स्वस्वरूपं स एव स्याच्छून्यत्वं तस्य दुर्घटम् ॥ २८४ ॥

येनेदं जानते सर्वं तं केनान्येन जानताम् ।
विज्ञातारं केन विद्यात् शक्तं वेद्ये तु साधनम् ॥ २८५ ॥

अवेद्योऽप्यपरोक्षोऽतः स्वप्रकाशो भवत्ययम् ।
सत्यं ज्ञानमनन्तं चेत्यस्तीह ब्रह्मलक्षणम् ॥ २८६ ॥

न व्यापित्वाद्देशतोऽन्तो नित्यत्वान्नापि कालतः ।
न वस्तुतोऽपि सार्वात्म्यादानन्त्यं ब्रह्मणि त्रिधा ॥ २८७ ॥

विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः ।
संत्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम् ॥ २८८ ॥

सदा विचारयेत्तस्माज्जगज्जीवपरात्मनः ।
जीवभावजगद्भावबाधे स्वात्मैव शिष्यते ॥ २८९ ॥

नाप्रतीतिस्तमोबाधः किंतु मिथ्यात्वनिश्चयः ।
नो चेत्सुषुप्तिमूर्च्छादौ मुच्येतायत्नतो जनः ॥ २९० ॥

परमात्मावशेषोऽपि तत्सत्यत्वविनिश्चयः ।
न जगद्विस्मृतिर्नोचेज्जीवन्मुक्तिर्न सम्भवेत् ॥ २९१ ॥

न सदासीद्विभातत्वान्नोसदासीच्च बाधनात् ।
विद्यादृष्ट्या श्रुतं तुच्छं तस्य नित्यनिवृत्तितः ॥ २९२ ॥

तुच्छानिर्वचनीया च वास्तवी चेत्यसौ त्रिधा ।
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥ २९३ ॥

सोऽसुप्तमानन्दमयं प्रक्रम्यैवं श्रुतिर्जगौ ।
एष सर्वेश्वर इति सोऽयं वेदोक्त ईश्वरः ॥ २९४ ॥

तस्मान्मुमुक्षिभिर्नैव मतिर्जीवेशवादयोः ।
कार्या किंतु ब्रह्मतत्त्वं विचार्यं बुध्यतां च तत् ॥ २९५ ॥

एवं तर्हि शृणु द्वैतमसन्मायामयत्वतः ।
तेन वास्तवमद्वैतं परिशेषाद्विभासते ॥ २९६ ॥

पुनश्चैतस्य वस्तुत्वं भाति चेत्तं तथा पुनः ।
परिशीलय कोऽवात्र प्रयासस्तेन ते वद ॥ २९७ ॥

कियन्तं कालमिति चेत् खेदोऽयं द्वैतमिष्यताम् ।
अद्वैते तु न युक्तोऽयं सर्वानर्थनिवारणात् ॥ २९८ ॥

परोक्षा चापरोक्षेति विद्या द्वेधा विचारणा ।
तत्रापरोक्षविद्याप्तौ विचारोऽयं समाप्यते ॥ २९९ ॥

झटित्यध्यास आयाति दृढवासनयेति चेत् ।
आवर्तयेद्विवेकञ्च दृढं वासयितुं सदा ॥ ३०० ॥

संगी हि बध्यते लोके निस्सङ्गीस्सुखमश्नुते ।
तेन सङ्गः परित्याज्यः सर्वदा सुखमिच्छता ॥ ३०१ ॥

अज्ञात्वा शास्त्रहृदयं मूढो वदत्यन्यथान्यथा ।
मूर्खाणां निर्णयस्त्वास्तामस्मिन्सिद्धान्त उच्यते ॥ ३०२ ॥

वैराग्यबोधोपरमास्सहायास्ते परस्परम् ।
प्रायेण सह वर्तन्ते वियुज्यन्ते क्वचित् क्वचित् ॥ ३०३ ॥

हेतुस्वरूपकार्याणि भिन्नान्येषामसङ्करः ।
यथावदवगन्तव्यः शास्त्रार्थं प्रविविच्यता ॥ ३०४ ॥

दोषदृष्टिर्जिहासा च पुनर्भोगेष्वधीनता ।
असाधारणहेत्वाद्या वैराग्यस्य त्रयोऽप्यमी ॥ ३०५ ॥

श्रवणादित्रयं तद्वत्तत्त्वमिथ्याविवेचनम् ।
पुनर्ग्रन्थेरनुदयः बोधस्यैते त्रयो मताः ॥ ३०६ ॥

यमादिर्धीनिरोधश्च व्यवहारस्य संक्षयः ।
स्युर्हेत्वाद्या उपरतेरित्यसङ्कर ईरितः ॥ ३०७ ॥

तत्त्वबोधः प्रधानं स्यात् साक्षान्मोक्षप्रदत्वतः ।
बोधोपकारिणावेतौ वैराग्योपरमावुभौ ॥ ३०८ ॥

एते त्रयोऽपि पक्वाश्चेत्महतस्तपसः फलम् ।
दुरितेन क्वचित्किञ्चित्कदाचित्प्रतिबध्यते ॥ ३०९ ॥

वैराग्योपरती पूर्णे बोधस्तु प्रतिबध्यते ।
यस्य तस्य न मोक्षोऽस्ति पुण्यलोकस्तपोबलात् ॥ ३१० ॥

पूर्णे बोधे तदन्यौ द्वौ प्रतिबद्धौ यदा तदा ।
मोक्षोऽपि निश्चितः किंतु दृष्टदुःखं न नश्यति ॥ ३११ ॥

ब्रह्मलोकतृणीकारो वैराग्यस्यावधिर्मतः ।
देहात्मत्वपरात्मत्वदार्ढ्ये बोधस्समाप्यते ॥ ३१२ ॥

सुप्तिवद्विस्मृतिस्सीमा भवेदुपरमस्य हि ।
दिशानया विनिश्चेयं तारतम्यमवान्तरम् ॥ ३१३ ॥

अवज्ञातं सदद्वैतं निश्शङ्कैरन्यवादिभिः ।
एवं का क्षतिरस्माकमद्वैतमभिजानताम् ॥ ३१४ ॥

द्वैतावज्ञा सुस्थिता चेदद्वैते धीस्स्थिरा भवेत् ।
स्थैर्ये तस्याः पुमानेषः जीवन्मुक्त इतीर्यते ॥ ३१५ ॥

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ३१६ ॥

जीवद्वैतं तु शास्त्रीयमशास्त्रीयमिति द्विधा ।
उपाददीत शास्त्रीयमातत्त्वस्यावबोधनात् ॥ ३१७ ॥

आत्मब्रह्मविचाराख्यं शास्त्रीयं मानसं जगत् ।
बुद्धे तत्त्वे तच्च हेयमिति श्रुत्यनुशासनम् ॥ ३१८ ॥

शास्त्राण्यधीत्य मेधावी ह्यभ्यस्य च पुनः पुनः ।
परमं ब्रह्म विज्ञाय तान्यथोल्कावदुत्सृजेत् ॥ ३१९ ॥

ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥ ३२० ॥

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत् ॥ ३२१ ॥

निजानीथाः विमुञ्चत
तमेवैकं विजानीथ ह्यन्या वाचो विमुञ्चथ ।
यच्छेद्वाङ्मनसी प्राज्ञ इत्याद्याश्श्रुतयस्स्फुटाः ॥ ३२२ ॥

अशास्त्रीयमपि द्वैतं तीव्रं मन्दमिति द्विधा ।
कामक्रोधादिकं तीव्रं मनोराज्यं तथेतरत् ॥ ३२३ ॥

उभयं तत्त्वबोधात्प्राङ् निवार्यं बोधसिद्धये ।
शमस्समाहितत्वं च साधनेषु श्रुतं ततः ॥ ३२४ ॥

बोधादूर्ध्वं च तद्धेयं जीवन्मुक्तिप्रसिद्धये ।
कामादिक्लेशबन्धेन युक्तस्य न हि मुक्तता ॥ ३२५ ॥

तत्त्वं बुद्ध्वापि कामादीन्निश्शेषं न जहासि चेत् ।
यथेष्टाचरणं ते स्याद्धर्मशास्त्रातिलंघिनः ॥ ३२६ ॥

बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥ ३२७ ॥

बोधात्पुरा मनोमात्रदोषात्क्लिश्यस्यथाधुना ।
अशेषलोकनिन्दा चेदहो ते बोधवैभवम् ॥ ३२८ ॥

विड्वराहादितुल्यत्वं मा काङ्क्षीस्तत्त्वविद्भवान् ।
सर्वधीदोषसन्त्यागाल्लोके पूज्यश्च देववत् ॥ ३२९ ॥

कामादिदोषदृष्ट्याद्याः कामादित्यागहेतवः ।
प्रसिद्धा मोक्षशास्त्रेषु तानन्विष्य सुखी भव ॥ ३३० ॥

त्यज्यतामेष कामादिर्मनोराज्ये तु का क्षतिः ।
अशेषदोषबीजत्वात्क्षतिर्भगवतेरिता ॥ ३३१ ॥

ध्यायतो विषयान्पुंसस्सङ्गस्तेषूपजायते ।
सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ॥ ३३२ ॥

शक्यं जेतुं मनोराज्यं निर्विकल्पसमाधितः ।
सुसंपादः क्रमात्सोऽपि सविकल्पसमाधिना ॥ ३३३ ॥

बुद्धतत्त्वेन धीदोषशून्येनैकान्तवासिना ।
दीर्घं प्रणवमुच्चार्य मनोराज्यं विजीयते ॥ ३३४ ॥

जिते तस्मिन्वृत्तिशून्यं मनस्तिष्ठति मूकवत् ।
एतत्पदं वसिष्ठेन रामाय बहुधेरितम् ॥ ३३५ ॥

दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् ।
सम्पन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृतिः ॥ ३३६ ॥

विक्षिप्यते कदाचिद्धीः कर्मणा भोगदायिना ।
पुनस्समाधिना साध्यात्तदेवाभ्यासपाटवात् ॥ ३३७ ॥

विक्षेपो यस्य नास्त्यद्य ब्रह्मवित्त्वं न मन्यते ।
ब्रह्मैवायमिति प्राहुः मुनयः पारदर्शिनः ॥ ३३८ ॥

दर्शनाऽदर्शने हित्वा स्वयङ्केवलरूपतः ।
यस्तिष्ठति स तु ब्रह्मन् ब्रह्म न ब्रह्मवित्स्वयम् ॥ ३३९ ॥

य एवं ब्रह्म वेदैष ब्रह्मैव भवति स्वयम् ।
ब्रह्मणो नास्ति जन्मातः पुनरेष न जायते ॥ ३४० ॥

प्रत्यग्बोधो यत्र भाति सोऽद्वयानन्दलक्षणः ।
अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥ ३४१ ॥

इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ।
अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ॥ ३४२ ॥

तदर्थस्य च पारोक्ष्यं यद्येवं किं ततश्शृणु ।
पूर्णानन्दैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥ ३४३ ॥

अहं ब्रह्मेति वाक्यार्थबोधो यावद्दृढीभवेत् ।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥ ३४४ ॥

वेदान्तानामशेषाणामादिमध्यावसानतः ।
ब्रह्मात्मन्येव तात्पर्यमिति धीश्श्रवणं भवेत् ॥ ३४५ ॥

तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वञ्च ब्रह्माभ्यासं विदुर्बुधाः ॥ ३४६ ॥

समन्वयाध्याय एतत्सूक्तं धीस्स्वास्थ्यकारिभिः ।
तर्कैस्सम्भावनार्थस्य द्वितीयाध्याय ईरिता ॥ ३४७ ॥

बहुजन्मदृढाभ्यासाद्देहादिष्वात्मधीः क्षणात् ।
पुनः पुनरुदेत्येवं जगत्सत्यत्वधीरपि ॥ ३४८ ॥

विपरीता भावनेयमेका स्यात्सा निवर्तते ।
तत्त्वोपदेशात्प्रागेव भवत्येतदुपासनात् ॥ ३४९ ॥

उपास्तयोऽत एवात्र ब्रह्मशास्त्रेऽपि चिन्तिताः ।
प्रागनभ्यासिनः पश्चाद्ब्रह्माभ्यासेन तद्भवेत् ॥ ३५० ॥

इति श्रुतिस्मृती नित्यमात्मन्येकाग्रतां धियः ।
विधत्तो विपरीताया भावनायाः क्षयाय हि ॥ ३५१ ॥

यद्यथा वर्तते तस्य तत्त्वं हित्वान्यथैव धीः ।
विपरीता भावना स्यात्पित्रादावरिधीर्यथा ॥ ३५२ ॥

आत्मदेहादिभिन्नोऽयं मिथ्या चेदं जगत्तयोः ।
देहाद्यात्मत्वसत्यत्वधीर्विपर्ययभावना ॥ ३५३ ॥

तत्त्वभावनया नश्येत्साऽतो देहातिरिक्तताम् ।
आत्मनो भावयेत्तद्वन्मिथ्यात्वं जगतोऽनिशम् ॥ ३५४ ॥

किं मन्त्रजपवन्मूर्तिध्यानवच्चात्मभेदधीः ।
जगन्मिथ्यात्वधीश्चात्र व्यावर्त्या स्यादुतान्यथा ॥ ३५५ ॥

अन्यथेति विजानीहि दृष्टार्थत्वेन भुक्तिवत् ।
बुभुक्षुर्जपवद्भुङ्क्ते न कश्चिन्नियतः क्वचित् ॥ ३५६ ॥

अश्नाति वा न वाश्नाति भुङ्क्ते वा स्वेच्छयान्यथा ।
येन केन प्रकारेण क्षुधामपनिनीषति ॥ ३५७ ॥

नियमेन जपं कुर्यादकृतौ प्रत्यवायतः ।
अन्यथाकरणेऽनर्थस्स्वरवर्णविपर्ययात् ॥ ३५८ ॥

क्षुधेव दृष्टबाधात्र विपरीता च भावना ।
ज्ञेया केनाप्युपायेन नास्त्यत्रानुष्ठितेः क्रमः ॥ ३५९ ॥

उपायः पूर्वमेवोक्तस्तच्चिन्ताकथनादिकः ।
एतदेकपरत्वेऽपि निर्बन्धो ध्यानवन्न हि ॥ ३६० ॥

मिथ्यात्ववासनादार्ढ्ये प्रारब्धक्षयकाङ्क्षया ।
अक्लिश्यन्तः प्रवर्तन्ते स्वस्वकर्मानुसारतः ॥ ३६१ ॥

ज्ञानिनोऽज्ञानिनश्चात्र समे प्रारब्धकर्मणी ।
न क्लेशो ज्ञानिनो धैर्यान्मूढः क्लिश्यत्यधैर्यतः ॥ ३६२ ॥

मार्गे गन्त्रोर्द्वयोश्श्रान्तौ समायामप्यदूरताम् ।
ज्ञानं धैर्याद्द्रुतं गच्छेदन्यस्तिष्ठति दीनधीः ॥ ३६३ ॥

साक्षात्कृतात्मधीस्सम्यगविपर्ययबाधितः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ ३६४ ॥

जगन्मिथ्यात्वधीभावादाक्षितौ काम्यकामुकौ ।
तयोरभावे सन्तापश्शाम्येन्निस्नेहदीपवत् ॥ ३६५ ॥

गन्धर्वपत्तने किञ्चिन्नैन्द्रजालिकनिर्मिते ।
जानन्कामयते किन्तु जिहासति हसन्निव ॥ ३६६ ॥

आपातरमणीयेषु भोगेष्वेवं विचारवान् ।
नानुरज्यति किन्त्वेतान्दोषदृष्ट्या जिहासति ॥ ३६७ ॥

अर्थानामार्जने क्लेशस्तथैव परिपालने ।
नाशे दुःखं व्यये दुःखं धिगर्थान्क्लेशकारिणः ॥ ३६८ ॥

मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे ।
स्नाय्वस्थिग्रन्थिशालिन्यास्स्त्रियाः किमिव शोभनम् ॥ ३६९ ॥

एवमादिषु शास्त्रेषु दोषास्सम्यक् प्रपञ्चिताः ।
विमृशन्ननिशं तानि कथं दृष्टेषु मज्जति ॥ ३७० ॥

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ३७१ ॥

नायं क्लेशोऽत्र संसारतापः किन्तु विरक्तता ।
भ्रान्त्यज्ञाननिदानो हि तापस्सांसारिकस्स्मृतः ॥ ३७२ ॥

विवेकेन परिच्छिन्दन्नल्पभोगेन तृप्यति ।
अन्यथाऽनन्तभोगेऽपि नैव तृप्यति कर्हिचित् ॥ ३७३ ॥

अवश्यम्भाविभावानां प्रतीकारो भवेद्यदि ।
तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः ॥ ३७४ ॥

जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चो यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ ३७५ ॥

अस्मिन्निद्रापि जीवेशौ चेतनौ स्वप्नगौ सृजेत् ।
महामाया सृजत्येताविंत्याश्चर्यं किमत्र ते ॥ ३७६ ।

सर्वज्ञत्वादिकञ्चेशे कल्पयित्वा प्रदर्शयेत् ।
धर्मिणं कल्पयेद्यास्याः को भारो धर्मकल्पने ॥ ३७७ ॥

यथा यथा भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि ।
सा सैव प्रक्रियेत्यस्यास्साध्वीत्याचार्यभाषितम् ॥ ३७८ ॥

श्रुतितात्पर्यमखिलमबुद्ध्वा भ्राम्यते जडः ।
विवेकी त्वखिलं बुद्ध्वा तिष्ठत्यानन्दवारिधौ ॥ ३७९ ॥

विचारयन्नामरणं नैवात्मानं लभेत चेत् ।
जन्मान्तरे लभेतैव प्रतिबन्धक्षये सति ॥ ३८० ॥

वर्णाश्रमवयोवस्थाऽभिमानो यस्य विद्यते ।
तस्यैव हि निषेधाश्च विधयस्सकला अपि ॥ ३८१ ॥

वर्णाश्रमादयो देहे मायया परिकल्पिताः ।
नात्मनो बोधरूपस्येत्येवं तस्य विनिश्चयः ॥ ३८२ ॥

समाधिमथ कर्माणि मा करोतु करोतु वा ।
हृदये न्यस्तसर्वार्थो मुक्त एव न संशयः ॥ ३८३ ॥

नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः ।
न समाधानजप्याभ्यां यस्य निर्वासनं मनः ॥ ३८४ ॥

अनुभूतेरभावेऽपि ब्रह्माऽस्मीत्येव चिन्त्यताम् ।
अप्यसत्प्राप्यते ध्यानान्नित्याप्तं ब्रह्म किं पुनः ॥ ३८५ ॥

अनात्मबुद्धिशैथिल्यं फलं ध्यानाद्दिने दिने ।
पश्यन्नपि न चेद्ध्यायेत्कोऽपरोऽस्मात्पशुर्वद ॥ ३८६ ॥

देहाभिमानं विध्वस्य ध्यानादात्मानमद्वयम् ।
पश्यन्मर्त्यो मृतो भूत्वा ह्यत्र ब्रह्म समश्नुते ॥ ३८७ ॥

अनेकजन्मभजनात्स्वविचारं चिकीर्षति ।
विचारेण विनष्टायां मायायां शिष्यते स्वयम् ॥ ३८८ ॥

अद्वयानन्दरूपस्य सद्वयत्वञ्च दुःखिता ।
बन्धः प्रोक्तस्स्वरूपेण स्थितिर्मुक्तिरितीर्यते ॥ ३८९ ॥

अविचारकृतो बन्धो विचारेण निवर्तते ।
तस्माज्जीवपरात्मानौ सर्वदैव विचारयेत् ॥ ३९० ॥

ईक्षे शृणोमि जिघ्रामि स्वादयामि स्पृशाम्यहम् ।
इति भासयते सर्वं नृत्यशालास्थदीपवत् ॥ ३९१ ॥

निरन्तरं भासमाने कूटस्थे ज्ञप्तिरूपतः ।
तद्भासा भास्यमानेयं बुद्धिर्नृत्यत्यनेकधा ॥ ३९२ ॥

न बाह्यो नान्तरस्साक्षी बुद्धेर्देशौ हि तावुभौ ।
बुद्ध्याद्यशेषसंशान्तौ यत्र भात्यस्ति तत्र सः ३९३ ॥

यद्यद्रूपादि कल्प्येत बुद्ध्या तत्तत्प्रकाशयन् ।
तस्य तस्य भवेत्साक्षी स्वतो वाग्बुद्ध्यगोचरः ॥ ३९४ ॥

कथं तादृङ्मया ग्राह्य इति चेन्मैव गृह्यताम् ।
सर्वग्रहोपसंशान्तौ स्वयमेवावशिष्यते ॥ ३९५ ॥

न तत्र मानापेक्षाऽस्ति स्वप्रकाशस्वरूपतः ।
तादृग्व्युत्पत्त्यपेक्षा चेच्छ्रुतिं पठ गुरोर्मुखात् ॥ ३९६ ॥

यदि सर्वपरित्यागोऽशक्यस्तर्हि धियं व्रज ।
शरणं तदधीनोऽन्तर्बहिर्वेषोऽनुभूयताम् ॥ ॥ ३९७ ॥

सनत्कुमारः प्राहैवं नारदायातिशोकिने ।
यो भूमा तत्सुखं नाल्पे सुखं नेह विभेदिनि ॥ ३९८

स पुराणान्पञ्च वेदान् शास्त्राणि विविधानि च ।
ज्ञात्वाप्यनात्मवित्वेन नारदोऽतिशुशोचह ॥ ३९९ ॥

वेदाभ्यासात्पुरा तापत्रयमात्रेण शोकिता ।
पश्चात्त्वभ्यासविस्फारभङ्गगर्वैश्च शोकिता ॥ ४०० ॥

सोऽहं विद्वन्प्रशोचामि शोकपारं नयात्र माम् ।
इत्युक्तस्सुखमेवास्य पारमित्यभ्यधादृषिः ॥ ४०१ ॥

सुखं वैषयिकं शोकसहस्रेणावृतत्वतः ।
दुःखमेवेति मत्वाह नाल्पेऽस्ति सुखमित्यसौ ॥ ४०२ ॥

ननु द्वैते सुखं माभूदद्वैतेऽप्यस्ति नो सुखम् ।
अस्ति चेदुपलभ्येत तथा च त्रिपुटी भवेत् ॥ ४०३ ॥

मास्तु द्वैते सुखं किन्तु सुखमद्वैतमेव हि ।
किं मानमिति चेन्नास्ति मानाकाङ्क्षा स्वयम्प्रभे ॥ ४०४ ॥

स्वप्रभुत्वे भवद्वाक्यं मानं यस्माद्भवानिदम् ।
अद्वैतमभ्युपेत्यास्मिन्सुखं नास्तीति भाषते ॥ ४०५ ॥

नाभ्युपैम्यहमद्वैतं त्वद्वचोऽनूद्य दूषणम् ।
वच्मीति चेत्तदा ब्रूहि किमासीद्वै ततः पुरा ॥ ४०६ ॥

किमद्वैतमुत द्वैतमन्यो वा कोटिरन्तिमः ।
अप्रसिद्धो न द्वितीयोऽनुत्पत्तेश्शिष्यतेऽग्रिमः ॥ ४०७ ॥

अद्वैतसिद्धिर्युक्त्यैव नानुभूत्येति चेद्वद ।
निर्दृष्टान्ता सदृष्टान्ता वा कोऽप्यन्तरमत्र न ॥ ४०८ ॥

नानुभूतिर्न दृष्टान्त इति युक्तिस्तु शोभते।
सदृष्टान्तस्वपक्षे तु दृष्टान्तं वद मे मतम् ॥ ४०९ ॥

अद्वैतः प्रलयोऽद्वैतानुपलम्भेन सुप्तिवत् ।
इति चेत्सुप्तिरद्वैतेत्यत्र दृष्टान्तमीरय ॥ ४१० ॥

दृष्टान्तः परसुप्तिश्चेदहो ते कौशलं महत् ।
यस्स्वसुप्तिं न वेत्त्यस्य परसुप्तौ तु का कथा ॥ ४११ ॥

निश्चेष्टत्वात्परस्सुप्तौ यथाहमिति चेत्तदा ।
उदाहर्तुस्सुषुप्तेस्ते स्वप्रभत्वं बलाद्भवेत् ॥ ४१२ ॥

नेन्द्रियाणि न दृष्टान्तस्तथाप्यङ्गीकरोषि ताम् ।
इदमेव स्वप्रभत्वं यन्मानं साधनैर्विना ॥ ४१३ ॥

स्तामद्वैतस्वप्रभत्वे वद सुप्तौ सुखं कथम् ।
शृणु दुःखं तदा नास्ति ततस्ते शिष्यते सुखम् ॥ ४१४ ॥

अन्धस्सन्नप्यनन्धस्स्याद्विद्धोऽविद्धोऽथ रोग्यऽपि।
अरोगीति श्रुतिः प्राह तच्च सर्वजना विदुः ॥ ४१५ ॥

स्वकीयसुखदुःखे तु नोहनीये ततस्तयोः ।
भावो वेद्योऽनुभूत्यैव तदभावोऽपि नान्यतः ॥ ४१६ ॥

तथा सति सुषुप्तौ च दुःखाभावोऽनुभूतितः ।
विरोधिदुःखराहित्यात्सुखं निर्विघ्नमिष्यताम् ॥ ४१७ ॥

महत्तरप्रयासेन मृदुशय्यादिसाधनम् ।
कुतस्सम्पाद्यते सुप्तौ सुखं चेत्तत्र नो भवेत् ॥ ४१८ ॥

दुःखनाशार्थमेवैतदिति चेद्रोगिणस्तथा ।
भवत्वरोगिणस्त्वेतत्सुखायैवेति निश्चिनु ॥ ४१९ ॥

तर्हि साधनजन्यत्वात्सुखं वैषयिकं भवेत् ।
भवत्वेवात्र निद्रायाः पूर्वशय्यासनादिजम् ॥ ४२० ॥

निद्रायां तु सुखं यत्तज्जन्यते केन हेतुना ।
सुखाभिमुखधीरादौ पश्चान्मज्जेत्परे सुखे ॥ ४२१ ॥

जाग्रद्व्यापृतिभिश्श्रान्तो विश्रम्याथ विरोधिनि ।
अपनीते स्वस्थचित्तोऽनुभवे विषये सुखम् ॥ ४२२ ॥

आत्माभिमुखधीवृत्तौ स्वानंदः प्रतिबिम्बति ।
अनुभूयैनमत्रापि त्रिपुट्या शान्तिमाप्नुयात् ॥ ४२३ ॥

तच्छ्रमस्यापनुत्यर्थं जीवो धावेत्परात्मनि ।
तेनैक्यं प्राप्य तत्रत्यो ब्रह्मानन्दस्स्वयं भवेत् ॥ ४२४ ॥

बाह्यं रथ्यादिकं वृत्तं गृहकृत्यं यथान्तरम् ।
तथा जागरणं बाह्यं नाडीस्थस्स्वप्न आन्तरः ॥ ४२५ ॥

पिताऽपि सुप्तावपितेत्यादौ जीवत्ववारणात् ।
सुप्तौ ब्रह्मैव नो जीवः संसारित्वासमीक्षणात् ॥ ४२६ ॥

निकृत्वाद्यभिमानो यस्सुखदुःखाकरस्य हि ।
तस्मिन्नपगते तीर्णस्सर्वाञ्छोकान्भवत्ययम् ॥ ४२७ ॥

सुषुप्तिकाले सकले विलीने तमसा वृतः ।
सुखरूपमुपैतीति ब्रूते ह्याथर्वणी श्रुतिः ॥ ४२८ ॥

सुखमस्वाप्समत्राहं न वै किञ्चिदवेदिषम् ।
इति सुप्ते सुखाज्ञाने परामृशति चोत्थितः ॥ ४२९ ॥

परामर्शोऽनुभूतेऽस्तीत्यासीदनुभवस्तदा ।
चिदात्मत्वात्स्वतो भाति सुखमज्ञानधीस्ततः ॥ ४३० ॥

ब्रह्म विज्ञानमानन्दमिति वाजसनेयिनः ।
पठन्त्यतस्स्वप्रकाशस्सुखं ब्रह्मैव नेतरत् ॥ ४३१ ॥

यदज्ञानं तत्रलीनौ तौ विज्ञानमनोमयौ ।
तयोश्च विलयावस्था निद्राज्ञानं च सैव हि ॥ ४३२ ॥

सुप्तिपूर्वक्षणे बुद्धिवृत्तिर्या सुखबिम्बिता ।
सैव तद्बिम्बसहिता लीनानन्दमयस्ततः ॥ ४३३ ॥

अन्तर्मुखो य आनन्दमयो ब्रह्मसुखं तदा ।
भुङ्क्ते चिद्बिम्बयुक्ताभिरज्ञानोत्पन्नवृत्तिभिः ॥ ४३४ ॥

अज्ञानवृत्तयस्सूक्ष्मा विस्पष्टा बुद्धिवृत्तयः ।
इति वेदान्तसिद्धान्तपारगाः प्रवदन्ति हि ॥ ४३५ ॥

माण्डूक्यतापनीयादिश्रुतिष्वेतदतिस्फुटम् ।
अज्ञानबिम्बिता चित्स्यान्मुखमानन्दभोजने ॥ ४३६ ॥

भुक्त्वा ब्रह्मसुखं त्यक्त्वा बहिर्यात्यथ कर्मणा ।
कर्म जन्मान्तरेऽभूद्यत्तद्योगाद्बुध्यते पुनः ॥ ४३७ ॥

इति कैवल्यशाखायां कर्मजो बोध ईरितः ।
किञ्चित्कालं प्रबुद्धस्य ब्रह्मानन्दस्य वासना ॥ ४३८ ॥

अनुगच्छेद्यतस्तूष्णीमास्ते निर्विषयस्सुखी ।
कर्मभिः प्रेरितः पश्चान्नानादुःखानि भावयन् ॥ ४३९ ॥

शनैर्विस्मरति ब्रह्मानन्दमेषोऽखिलो जनः ।
प्रागूर्ध्वमपि निद्रायाः पक्षपातो दिने दिने ॥ ४४० ॥

ब्रह्मानन्दे नृणां तेन प्राज्ञोऽस्मिन्विवदेत कः ।
ननु तूष्णीं स्थितौ ब्रह्मानन्दश्चेद्भाति लौकिकाः ।
अलसाश्चरितार्थास्स्युश्शास्त्रेण गुरुणात्र किम् ॥ ४४१ ॥

बाढं ब्रह्मेति विद्युश्चेत्कृतार्थास्तावतैव ते ।
गुरुशास्त्रे विनात्यन्तं गम्भीरं ब्रह्म वेत्ति कः ॥ ४४२ ॥

जानाम्यहं त्वदुक्त्याद्य कुतो मे न कृतार्थता ।
शृण्वत्र त्वादृशो वृत्तं प्राज्ञम्मन्यस्य कस्यचित् ॥ ४४३ ॥

चतुर्वेदविदे देयमिति शृण्वन्नवोचत ।
वेदाश्चत्वार इत्येवं वेद्मि मे दीयतां धनम् ॥ ४४४ ॥

संख्यामेवैष जानाति न तु वेदानशेषतः ।
यदि तर्हि त्वमप्येवं नाशेषं ब्रह्म वेत्सि हि ॥ ४४५ ॥

अखण्डैकरसानन्दे मायातत्कार्यवर्जिते ।
अशेषत्वसशेषत्ववार्तावसर एव कः ॥ ४४६ ॥

शब्दानेव पठस्याहो तेषामर्थञ्च पश्यसि ।
शब्दपाठेऽर्थबोधस्ते सम्पाद्यत्वेन शिष्यते ॥ ४४७ ॥

अर्थे व्याकरणाद्बुद्धे साक्षात्कारोऽवशिष्यते ।
स्यात्कृतार्थत्वधीर्यावत्तावद्गुरुमुपास्स्व भोः ॥ ४४८ ॥

आस्तामेतद्यत्र यत्र सुखं स्याद्विषयैर्विना ।
तत्र सर्वत्र विद्ध्येतां ब्रह्मानन्दस्य वासनाम् ॥ ४४९ ॥

विषयेष्वपि लब्धेषु तदिच्छोपरमे सति ।
अन्तर्मुखमनोवृत्तावानन्दः प्रतिबिम्बति ॥ ४५० ॥

श्रुतियुक्त्यनुभूतिभ्यस्स्वप्रकाशचिदात्मके ।
ब्रह्मानन्दे सुप्तिकाले सिद्धे सत्यन्यदा शृणु ॥ ४५१ ॥

य आनन्दमयस्सुप्तौ स विज्ञानमयात्मताम् ।
गत्वा स्वप्नं प्रबोधं वा प्राप्नोति स्थानभेदतः ॥ ४५२ ॥

नेत्रे जागरणं कण्ठे स्वप्नस्सुप्तिर्हृदम्बुजे ।
आपादमस्तकं देहं व्याप्य जागर्ति चेतनः ॥ ४५३ ॥

देहतादात्म्यमापन्नस्तप्तायःपिण्डवत्ततः ।
अहं मनुष्य इत्येवं निश्चित्यैवावतिष्ठते ॥ ४७४ ॥

उदासीनस्सुखी दुःखीत्यवस्थात्रयमेत्यसौ ।
सुखदुःखे कर्मकार्ये त्वौदासीन्यं स्वभावतः ॥ ४७५ ॥

बाह्यभोगान्मनोराज्यात्सुखदुःखे द्विधा मते ।
सुखदुःखान्तरालेषु भवेत्तूष्णीमवस्थितिः ॥ ४७६ ॥

न काऽपि चिन्ता मेऽस्त्यद्य सुखमास इति ब्रुवन् ।
औदासीन्ये निजानन्दभानं वसत्यखिलो जनः ॥ ४७७ ॥

यावद्यावदहङ्कारो विस्मृतोऽभ्यासयोगतः ।
तावत्तावत्सूक्ष्मदृष्टेर्निजानन्दोऽनुमीयते ॥ ४७८ ॥

सर्वात्मना विस्मृतस्सन्सूक्ष्मतां परमां व्रजेत् ।
अलीनत्वान्न निद्रैषा ततो देहोऽपि नो भवेत् ॥ ४७९ ॥

न द्वैतं भासते नाऽपि निद्रा तत्राऽस्ति यत्सुखम् ।
स ब्रह्मानन्द इत्याह भगवानर्जुनं प्रति ॥ ४८० ॥

शनैश्शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ ४८१ ॥

जलोर्व्यण्ड
खानिलाग्निज्वलोर्व्यण्डलोकप्राणिशिलादिकाः ।
विकाराः प्राणिधीष्वन्तश्चिच्छाया प्रतिबिम्बिता ॥ ४८२ ॥

चेतनाचेतनेष्वेषु सच्चिदानन्दलक्षणम् ।
समानं ब्रह्म भिद्येते नामरूपे पृथक् पृथक् ॥ ४६३ ॥

ब्रह्मण्येते नामरूपे पटे चित्रमिव स्थिते ।
उपेक्ष्य नामरूपे द्वे सच्चिदानन्दधीर्भवेत् ॥ ४६४ ॥

प्रथमं सच्चिदानन्दे भासमानेऽथ तावता ।
बुद्धिं नियम्य नैवोर्ध्वं धारयेन्नामरूपयोः ॥ ४६५ ॥

निरुपाधिब्रह्मतत्त्वे भासमाने स्वयंप्रभे ।
अद्वैते त्रिपुटी नास्ति भूमानन्दोऽथ उच्यते ॥ ४६६ ॥

एवञ्च निर्जगद्ब्रह्म सच्चिदानन्दलक्षणम् ।
अद्वैतानन्द एतस्मिन्विश्राम्यन्तु जनाश्चिरम् ॥ ४६७ ॥

॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥